UGC - CARE LISTED

ISSN: 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A Refereed & Peer-Reviewed Quarterly Research Journal)

46 वर्षे द्वितीयोऽङ्कः ( अप्रैलमासाङ्कः ) 2021





श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः

केन्द्रीयविश्वविद्यालयः

नवदेहली-16

UGC- CARE Listed ISSN : 0974-8946

अनुसन्धान-प्रकाशन-विभागीया त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

**(A REFEREED & PEER- REVIEWED QUATERLY RESEARCH JOURNAL)**

46 वर्षे द्वितीयोऽङ्कः ( अप्रैलमासाङ्कः ) 2021 ई.






**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः**
नवदेहली-110016

प्रकाशकः
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः**
बी-4, कुतुब-इन्स्टीट्यूशनल एरिया, नवदेहली-110016



**ISSN :- 0974 - 8946**

46 वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) 2021 ई.

बेवसाइटसङ्केतः - www.slbsrsv.ac.in
ई-मेलसङ्केतः - shodhaprabhalbs@gmail.com
दूरभाषसङ्केतः - 011-46060609, 46060502

सूचनाः- शोधपत्रलेखकैः स्वशोधपत्रे दूरभाषाङ्काः अवश्यं लेखनीयाः

मुद्रकः - गणेशप्रिंटिंगप्रेसः, कटवारियासरायः, नवदेहली-16


केन्द्रीयविश्वविद्यालयः



# शोधप्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्य
## अनुसन्धान–प्रकाशन–विभागीया शोध–पत्रिका

- एषा त्रैमासिकी शोध–पत्रिका।
- अस्याः प्रकाशनं प्रतिवर्षं जनवरी–अप्रैल–जुलाई–अक्टूबरमासेषु भवति।
- अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान–प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- अस्यां श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीका–टिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- शोधपत्रलेखकाः शोधपत्रस्यान्ते पत्राचारसङ्केतः दूरभाषसंख्या, ईमेलसङ्केतश्च अवश्यं लेखनीयाः।
- पत्रिकायाः एका प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- अस्यां पत्रिकायां विशिष्टानां संस्कृत–हिन्द्याङ्ग्ल–ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशित–शोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्णं दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- अस्या एकाङ्कस्य मूल्यम् रु. 125.00, वार्षिकसदस्यताराशिः रु. 500.00 पञ्चवार्षिकसदस्यताराशिः रु. 2000.00, आजीवनसदस्यताराशिः रु. 5000.00
- सदस्यताराशिः **कुलसचिव, श्रीलाल बहादुर शास्त्री राष्ट्रिय संस्कृत विश्वविद्यालय,** नई दिल्ली–16, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः वा ई–बैंकमाध्यमेन देयः।
- पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः **'सम्पादक' शोध–प्रभा'**
**श्रीलाल बहादुर शास्त्री राष्ट्रिय संस्कृत विश्वविद्यालय (केन्द्रीय विश्वविद्यालय), कटवारिया सराय, नई दिल्ली– 110016** इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

संस्कृतं नाम चैतन्याधायकं किमप्यपूर्वं वस्तु, जीवनस्पन्दनञ्चास्मत्संस्कृतेः मानवतायाश्च, तपश्चरणफलं पूर्वजानाम्, सर्वथा संरक्ष्यो दायादश्च भाग्योत्कर्षासादितः, सुकृतपरिपाकश्चास्माकम्। यच्च न केवलं सूतेऽचिन्त्यं महत्फलमपितु स्थापयत्याचारे, प्रयोजयति पुरुषार्थेषु च। यस्य संरक्षणेन, संवर्द्धनेन च परिस्फुरति श्रीः सर्वस्या अपि संसृतेः, विरुद्धानामपि समञ्जसं समन्वयनं यस्यानुपमं सौन्दर्यम्। इत्थमवसितेऽपि नूनं शिष्यते बहुविधेयमेतदीयम्, न केवलं स्तुत्या संभवत्यस्यालङ्करणमपितु सौरभविकिरणेन, कर्मतया परिणत्या च। न तोष्टव्यं केवलमाहितकर्मसम्पत्त्या, अपित्वेष्टव्यमार्षप्रज्ञा प्रसूतशास्त्रसंरक्षणम्।

अपूर्व एव महिमा शास्त्राणामाविर्भूततत्प्रकाशानां तेषां महर्षीणाम्। स्वशरीरं तृणाय मन्यमानैः तपः-स्वाध्यायनिरतैर्यैर्महात्मभिः स्वानुभूतिमहिम्ना समधिगतं नित्यनिरवद्यं मातापितृसहस्रेभ्योऽपि वत्सलतरमतिसम्पन्नं शास्त्रजातमतिरिच्य किं वा स्यात्स्वकीयं स्वरूपावेदकं वा तत्त्वमिति बहुधा चिन्तयामि। महच्चित्रमिदं स्थाने न यथावन्निरूप्यते शास्त्रसम्पत्, नेदानीमपि पूर्णतया परीक्ष्यते व्युत्पत्तिपाटवं, न च प्रतीक्ष्यते शास्त्रानुगतत्वम्। इदमपि विस्मयकरं यन्न समाराध्यते कश्चिदपि ग्रन्थ आमूलमिति नाधिगम्यते शास्त्रस्य व्यवस्थितं रूपं प्रतिपित्सितं वाञ्जसा। शास्त्राभिरुचिग्रहणे प्रतिबन्धकं भवति स्वरूपसंस्कारवैकल्यमन्तेवासिनाम्, स्वच्छदर्पण इवाविकलं प्रतिफलति गुरूणां प्रतिभा। शिष्या- योग्यताप्रमादनियमित आचार्यगतो ग्रन्थग्रन्थिविस्फोरणक्षमोऽपि प्रज्ञाप्रवाहो न मुक्तं विहरति शास्त्राङ्गणे।

इदमतिरोहितमेव विदुषां यदस्मद्विश्वविद्यालयः शास्त्रसंरक्षणदिशि कश्चित्क्रमं प्रवर्तयन्निव सर्वदा बोभवतीति तद्विधावेवेयं **शोधप्रभा** स्वलक्ष्यमाकलय्यानुदिनं समेधमाना शास्त्रचैतन्यं विकिरन्ती समुल्लसति। तस्या एवाङ्कविशेषः सम्प्रति स्वाहितनिबन्धगौरवेन भवत्पाणिपल्लवपुटमुपेत्योत्स्मयमाना विलसति। अतः शोधप्रकाशनविभागाय धन्यवादं वितन्वन् पाठकानां शं समीहे।

**प्रो. मुरलीमनोहरपाठकः**
कुलपतिः

# सम्पादकीयम्

समस्तेऽपि जगति मानवानां परस्परं व्यवहारसम्पादनाय, परस्परं भावावबोधनाय, स्वीयविचारसम्प्रेषणाय च मानवैः यत् साधनं विनिर्मितं तद्भाषापदेन व्यपदिश्यते लोके। अनया भाषया एव जनैः स्वसुख-दुःख-हर्ष-विषादप्रभृतिचित्तभावानां परस्मै प्रकाशनं क्रियते। यद्यपि विश्वेऽस्मिन् सन्ति बह्व्यः भाषाः याभिः जनाः स्वकीयं जीवनं व्यवहरन्ति तथापि तासु तादृशं सामर्थ्यं, तादृशी व्यापकता, वैज्ञानिकता च नावलोक्यते यथा विराजते अस्माकं संस्कृतभाषायाम्। अस्याः भाषायाः वैज्ञानिकता, सरलता, सरसता, मधुरता, व्यापकता, सर्वभाषाजनकता च पदे-पद भाषाविद्भिः प्रतिपादिता भूरिशः प्रशंसिता च। संस्कृतभाषायाः एतद्वैभवं विलोक्य न केवलमस्माकं पूर्वजाः नतमस्तका अपितु वैदेशिका अपि अभिभूताः विलोक्यन्ते। अनेके पाश्चात्यकोविदः संस्कृतभाषायां व्याकरण-दर्शन- काव्यविषयमवलम्ब्य नैकग्रन्थाः प्रणीतवन्तः। वैदेशिकैः न केवलं ग्रन्थलेखनं कृतम् अपितु टीकाकार्यम्, अनुवादकार्यम्, समीक्षाकार्यम्, व्याख्याकार्यम्, सम्पादनकार्यञ्च विहितम्। न केवलमेतावदेव अपितु वेदोपनिषद्गीता-रामायण-महाभारत-व्याकरण-काव्य-दर्शनविषयेऽपि पाश्चात्य-चिन्तकैः सश्रद्धं लेखनं सम्पादनञ्च विहितम्। वैदेशिकाः संस्कृतं प्रति अतीवसमुत्सुकाः श्रद्धावन्तश्च दृश्यन्ते। संस्कृतं प्रति तेषां श्रद्धाविषये विल्सनमहोदयानां अनुष्टुपछन्देन विरचितमधोलिखितं पद्यद्वयं सर्वथा प्रमाणभूतम्। अनयोः पद्ययोः भावं संस्मरन् देवभाषा संस्कृतं प्रति हृदयेन नितान्तं गौरवमनुभवामि-

**यावद् गङ्गा च गोदा च यावद्विन्ध्यहिमाचलौ।**
**यावद् भारतवर्षं स्याद् तावदेव हि संस्कृतम्॥**
**न जाने विद्यते किं तद् माधुर्यमत्र संस्कृते।**
**सर्वदैव समुन्मत्ता येन वैदेशिका वयम्।**

46 वर्षे अङ्केस्मिन् विविधविषयविश्लेषणपराः सप्तदशलेखाः प्रकाश्यन्ते। एवं प्रतिभाविशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थते सुमनसः विदुषः।

**प्रो.शिवशङ्करमिश्रः**
**शोधविभागाध्यक्षः**




# विषयानुक्रमणिका

## संस्कृतविभागः

## हिन्दी विभाग



## English Section

UGC - CARE Listed
शोधप्रभा
अप्रैल-जून, 2021
वर्ष : 46, द्वितीयोऽङ्कः

# वाक्यपदीयमहाभाष्ययोः सन्दर्भे ध्वनिपदार्थविश्लेषणम्

डॉ. प्रमोदकुमारशर्मा[1]

**आलेखेऽस्मिन् ध्वनिविषयकं भाषावैज्ञानिकं स्वरूपमुद्भाव्य व्यावहारिकं शब्दस्वरूपं वाक्यपदीयं महाभाष्यञ्चाश्रित्य निरूपितमस्ति। ध्वनिस्फोटयोः पार्थक्यम. ाहोस्विदैक्यमपि चिन्तिमस्ति। आलेखान्ते च शब्दार्थयोः भेदाऽभेदयोः स्वरूपमुद्भाव्य शब्दार्थस्य वैभिन्न्यमपि निदर्शितमस्ति।**

**सदा यष्ट्याघातैर्ध्वनयति चलन्नेष पुरुषो, निरायासं सर्पो भवतु ननु दूरं यत इति।**
**स्रवन्ती नित्यं ध्वानयति नितरां कर्णसुखदं, बुधा मन्यन्तेऽतो मुखजनितशब्दो ध्वनिरिति?**
**ध्वनितमृदङ्गध्वनिमाकर्ण्य ध्वान्ते गच्छति शिशुरप्येषः।**
**अपि सति जाते भये तदानीं ध्वनति सदर्पं हनुमन् हनुमन्?**

ध्वनिशब्दोऽयं बह्वर्थः, यथा गुणशब्दः व्याकरणनिकाये संज्ञाविशेषमाह, न्यायवैशेषिकदर्शने गुणशब्दः पदार्थविशेषवाचकः, सांख्यदर्शनशास्त्रे च पुनः द्रव्यमर्थमेवमभिदधाति तथैवायं ध्वनिशब्दः व्याकरणनिकाये ध्वनिस्फोटयोः वाचकः किन्तु काव्यसम्प्रदाये आत्मनः शब्दस्वरूपार्थं परित्यज्य अर्थरूपार्थमेव प्रस्तौति। अतोऽत्र सर्वस्मादौ व्याकरणशास्त्रदृशा ध्वनिशब्दोऽयं पदार्थविशेषतया निरूप्यते। ध्वनिसमूहमेव प्रायः शब्दपदेन व्यवहरन्ति लोके जनाः, अतो व्याकरणसम्प्रदाये शब्दशास्त्रिभिरपि शब्दः ध्वन्यात्मकः अनुमोदितः। प्रवक्तुः प्रतिपत्तुश्च परस्परं व्यवहारसम्पादनार्थं शब्दाः प्रयुज्यन्ते। प्रयोक्ता स्वकीयमन्तःस्थां भावनां प्रकटयितुं शब्दभावनां कुरुते। शब्दानां ध्वन्यात्मकं रूपं व्यावहारिकस्वरूपं भवति।

महर्षिणा पाणिनिनाऽपि स्वं रूपं शब्दस्याऽशब्दसंज्ञा[2] इति सूत्रं विरच्य शब्दशास्त्रीयप्रक्रियां सम्पादयितुं ध्वन्यात्मकं व्याहारिकमेव शब्दस्वरूपं समाश्रितम्। भगवान् पाणिनिरन्यदपि एकं शब्दस्वरूपं निर्दिदेश, तदस्ति शब्दानां तात्त्विकं शब्दस्वरूपम्। तात्त्विकमेतच्छब्दस्वरूपं भाषावैज्ञानिकमपि वक्तुं शक्यते। महभाष्ये 'अस्त्यन्यत् स्वं शब्दस्येति किं पुनस्तत्' अर्थः[3]

1. सहाचार्यः, संस्कृतमेवम्प्राच्यविद्याध्ययनसंस्थानम्, जवाहरलानेहरुविश्वविद्यालयः नवदेहली-110067
2. अष्टाध्यायी, 1-1-68
3. महाभाष्य, 1-1-68

इति। पतञ्जलिरर्थपदेन तच्छब्दस्वरूपं व्याचष्टे यच्छब्दभावनारूपेण वक्तरि पूर्वत एव सन्तिष्ठते। भाषातात्त्विकमिदं शब्दस्वरूपमेव स्फोटपदेन व्यवह्रियते। यः ध्वनिसमुदायः कञ्चन अर्थप्रत्ययं जनयितुं समर्थः स एव शब्दपदव्यवहार्यो भवति। अर्थप्रत्ययानुत्पादकः केवलं श्रोतृगृहीतो ध्वनिः शब्दशास्त्रे शब्दपदानर्हो भवति। अतोऽत्र द्विविधं नाम शब्दस्वरूपम् 1. व्यावहारिकं शब्दस्वरूपम्। 2. भाषावैज्ञानिकं तात्त्विकं शब्दस्वरूपम्

कस्मैचनापि शब्दशास्त्रिणे द्विविधमिदं शब्दस्वरूपमभिमतं भवति। शब्दपूर्णतायै द्विविधमपि आवश्यकं भवति। शब्दस्य स्वरूपद्वयमेतत् पाणिनीये तन्त्रे साकल्येन अभिमतं व्याख्यातञ्च। शब्दतत्त्वदृष्ट्या उभयमप्यत्र विविच्यते.

**व्याहारिकं शब्दस्वरूपम्-**

सर्वैः लौकिकाः व्यवहाराः व्यावहारिकेण एव शब्दस्वरूपेण सम्पाद्यन्ते। तत्र शा-शपिभ्यां ददनाविति सूत्रेण[1] व्यवहारसाधनार्थे शब्दशब्दो निष्पाद्यते। अनया शब्दपदव्युत्पत्या एतदनुमीयते यत् प्रारम्भिकी शब्दप्रवृत्तिः नामकरणात्मिका एव सम्बभूव। शपन्ति तेनेति शब्दः। संस्कृता वाक्[2] इति उणादिं व्याचक्षाणः दशपाद्युणादिवृत्तिकारः आह्वानकरणं शब्दं व्याचष्टे। अतो शपन्ति व्यपदिशन्ति आह्वयन्ति अनेन वाग्व्यापारेण स खलु शब्दः उच्यते। शप्यते आहूयते अनेन स शब्दोः नादः । शब्दशब्दस्य चेयं व्युत्पत्तिः परिभाषा वा शब्दस्य व्यावहारिकस्वरूपदृष्ट्या एव क्रियते। व्यवहारे प्रायः शब्दस्यान्तरिकं तात्त्विकं स्वरूपं नाऽनुभूयते। अत एव अथवा प्रतीतपदार्थको लोके ध्वनिः शब्दः इत्युच्यते, तस्माद् ध्वनिः शब्दः[3] इति पतञ्जलिना महाभाष्ये व्यावहारिकोऽयं चर्चितः शब्दः लोकप्रतीतिजनकः व्यवहारे ध्वनिसमुदायरूपः कण्ठतः प्रोक्तः। अत एव लोके ध्वनिं कुर्वन् बालक उच्यते शब्दकारी खल्वयं माणवकः इति। ध्वनिमेवाभिप्रेत्य चोच्यते शब्दं कुरु, मा शब्दं कार्षीरिति। अतःशब्दपदेन लोके प्रतीतिपदार्थको ध्वनिविशेषः शब्दो भवतीति विख्यातिरस्ति। एतेषामेव लोकविख्यातप्रतीतपदार्थकध्वनिरूपशब्दानामेव पाणिनीयशास्त्रेण अनुशासनं क्रियते। एतदेव 'अथ शब्दानुशासनम्'[4] इति महाभाष्यकारपतञ्जलेरभिप्रायः। अत्रेदमवश्यं विज्ञेयं यत् नादे ध्वनिसमुदाये वा शब्दत्वव्यपदेशः उभयप्रकारकशब्दे अभेदबुद्ध्या एव क्रियते । प्रयोगदृष्ट्या हि शब्दानां व्यावहारिकं स्वरूपं समाश्रियते। शब्दस्य स्वरूपग्राहकः प्रयोग एव भवति। लौकिकप्रयोगं विना शब्दस्य रूपनिर्ग्रहः कथञ्चिदपि न भवतीति पतञ्जलिना कण्ठतः प्रोक्तम् 'रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकप्रयोगम्'[5] इति। मीमांसादर्शनानुसारमाचार्य उपवर्षः शब्दस्येदं व्यावहारिकं शब्दस्वरूपमेवाऽभिप्रेत्य ध्वनीनां शब्दत्वं स्वीचकार।

1. उणादिसूत्रम्, 4-94
2 उणादिसूत्रम्, 4-48
3 महाभाष्यम, पस्पशाह्निकम्
4 महाभाष्यम, पस्पशाह्निकम्
5 महाभाष्यम्.,1-1-22 , 6-4-16

मीमांसासूत्रं व्याचक्षाणः शबरस्वामी आचार्योपवर्षमतमुल्लिलेख. 'अथ गौरित्यत्र कः शब्दः गकारौकारविसर्जनीयाः इति भगवानुपवर्षः'[1] इति। एतदनुसारमपि गौरित्यत्र गकारौकार विसर्जनीयध्वनिसंघात एवास्ति शब्दः। बादरायणसूत्रं भाषमाणेन आचार्यशङ्करेणापि 'वर्णा एव तु शब्दाः इति भगवानुपवर्षः'[2] इत्युक्तम्। अतः भगवतः उपवर्षस्येदं निरुक्तं मतं वस्तुतः शब्दानां प्रायोगिकरूपमात्रं संलक्ष्यैव विद्यते। एतेनेदं निश्चितं जातं यत् ध्वनितः प्राक् स्फोटात्मकः यदि आन्तरः शब्दो न भवेत् तर्हि निश्चितार्थे निश्चितस्य ध्वन्यात्मकस्य शब्दस्योच्चारणमपि न सम्भवेदिति। शब्दव्यवहाराय लोके कण्ठताल्वाद्यभिघातेन प्रयुक्तो ध्वनिः शब्दभावनान्तरमेव प्रतिपत्तुः शाब्दप्रत्ययं जनयति। ध्वनिरूपशब्दं परिभाषमाणः पतञ्जलिः शब्दे तत्थ्यत्रयं निर्दिदेश। श्रौत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः, प्रयोगेणाभिज्वलितः, आकाशदेशः[3] शब्द इति शब्दशाकल्यार्थं श्रोत्रोपलब्धित्वं बुद्धिनिर्ग्राह्यत्वं तथा प्रयोगेणाऽ-भिज्वलितत्त्वमेतत् त्रयमपि आवश्यकं भवति। व्यावहारिकशब्दस्वरूपस्य इमे एव त्रय आधाराः सन्ति। तत्रादौ-

**1. श्रोत्रोपलब्धिः-**

श्रवणेन्द्रियेण भवति शब्दस्योपलब्धिः। शब्दस्य श्रोत्रमात्रविषयत्वात् श्रोत्रमन्तरा शब्दस्य उपलब्धिर्न भवति। शब्दस्य व्यावहारिकस्वरूपावगतये श्रोत्रेण शब्दप्रत्यक्षमावश्यकं भवति। कर्णशष्कुलीवर्ति आकाशमुच्यते श्रोत्रम्। आकाशं शब्दस्य आश्रय इति गौतमकणादादिभिः स्पष्टमुच्यते 'श्रोत्रग्रहणे योऽर्थः स शब्दः'[4] वैशेषिकदर्शनानुसारं श्रोत्रेन्द्रियस्य विषयः शब्दः अर्थपदेनाप्यभिधीयते। अतः श्रोत्रस्य अर्थः शब्दः इत्यप्यवश्यं ज्ञातव्यं सुधीभिः।

**2. बुद्धिनिर्ग्राह्यः-**

कण्ठताल्वाद्यभिघातेन ध्वनयः क्रमशः उत्पद्यन्ते। उच्चारिताश्च पुनः ध्वनयः क्रमशो ध्वस्ताः भवन्ति एवञ्च एकत्र एकदा च ध्वनिसमुदाय उपलब्धुं न शक्यते। उच्चरितप्रध्वंसिशीलैः पूर्वपूर्वध्वनिभिः बुद्धौ तच्छब्दसंस्कारः संस्थाप्यते। सः क्रमप्राप्तः बौद्धः शब्दसंस्कारः एव अन्त्येन ध्वनिना अभिव्यक्तो भवति। इत्थं हि अन्त्यवर्णश्रवणानन्तरं बुद्ध्या व्यावहारिकं शब्दस्वरूपं सुविज्ञातं भवति। इदमेव तथ्यं महाभाष्यप्रदीपव्याख्यायां कैयटो निजगाद. 'पूर्वपूर्वध्वन्युत्पादिताभिव्यक्तिजनितसंस्कारपरम्पराप्राप्तपरिपाकान्त्यबुद्धि-निर्ग्राह्य इत्यर्थः'[5] इति।

ध्वन्यात्मके नादे शब्दसंस्कारो वक्तृभावनाऽनुसारेण पूर्वतः एव सन्तिष्ठते। प्रतिपत्तुः

---

1. शा.भा. 1-1-5
2. शा.भा. 1-3-28
3. प्रत्याहाराह्निकं महाभाष्यम्
4. 2-2-21
5. प्रत्याहाराह्निक म. भा. सू. 1

शब्दग्रहणे शाब्दबोधे च एष शब्दसंस्कारो भवति आवश्यकः भर्तृहरिणापीदमेवोक्तम्-

**नादैराहितबीजायामन्त्येन ध्वनिना सह, आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते[1]। इति**

**3. प्रयोगेणाभिज्वलितः-**

शब्दस्य श्रोत्रोपलब्धित्वं बुद्धिनिर्ग्राह्यता प्रयोगपदमत्र ध्वन्यर्थकम्। प्रयुज्यते इति प्रयोगो ध्वनिः, तेन अभिव्यक्तः इति महाभाष्ये स्पष्टम्। ध्वनिरेव भवति शब्दस्य व्यावहारिकत्वप्रयोजकम् । ध्वनिसमुदाय एव प्रतिपत्तुः शाब्दं प्रत्ययं जनयति। शब्दस्य प्रायोगिकं रूपं भवति ध्वनिः। महाभाष्ये पतञ्जलिः स्फोटलक्षणस्य शब्दस्य ध्वनिं गुणं स्माचष्ट- 'एवं तर्हि स्फोटः शब्दः ध्वनिः शब्दगुणः'[2] इति।

कस्यचनापि वस्तुतत्त्वस्योपकारको ग्राहको वा तद्गतो गुण एव भवति। ध्वनिना प्रकाशित एव शब्दः व्यक्तरूपग्रहणानुगुणैरुपायभूतैः अनुपाख्येयैः प्रत्ययैः स्वरूपं ग्राहयतीति स्पष्टं प्रत्यपादयत् भर्तृहरिः.

**प्रत्ययैरनुपाख्येयैः ग्रहणाऽनुगुणैस्तथा।**
**ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते[3]?**

अतो अलब्धक्रमया वाचा प्रतिपत्रा कञ्चनाऽप्यर्थं नाधिगच्छतीति स्वोपज्ञहरिवृषभ टीकायामुद्धृतम्-

**ज्ञेयेन न विना ज्ञानं व्यवहारेऽवतिष्ठते।**
**नाऽलब्धक्रमया वाचा कश्चिदर्थोऽभिधीयते[4]।।**

अतः अइउण् इति सूत्रभाष्ये पतञ्जलेः निरुक्तं 'श्रोत्रोपलब्धिः बुद्धिनिर्ग्राह्यः प्रयोगेण ाभिज्वलितः आकाशदेशः शब्दः इति शब्दस्वरूपं सिद्धान्तभूतमस्तीति सिद्धं जातम्। अथ शब्दानुशासनम् इति ब्रुवाणस्य पतञ्जलेः शब्दपदेन नादाख्यो व्यावहारिक एव शब्दोऽभिप्रेतः । शब्दशास्त्रीयप्रक्रियायां तस्यैवोपयोगसम्भवात्। ह्रस्वदीर्घ-प्लुतोदात्तानुदात्त-स्वरितानुनासिक-निरनुनासिक-द्रुत-मध्यम-बिलम्बित-गुण-वृध्द्यादिव्याकरणकार्याणि तत्रैव ध्वन्यात्मके शब्दे सम्भवति स्फोटे तु निरुक्तकार्याणि कथञ्चिदपि न सम्भवति। प्राकृतवैकृतनादयोः कालभेद एव स्फोटलक्षणे अन्त:शब्दे आरोप्यते इति स्वयमेवाह भर्तृहरिः.

**स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु।**
**प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते[5]?**

---

1. वाक्यपदीय, ब्रह्मकाण्ड-84
2. म.भा. 1-1-7
3. वाक्यपदीय, ब्रह्मकाण्ड-83
4. वाक्यपदीय ब्रह्मकाण्ड, 86
5. वाक्यपदीय ब्रह्मकाण्ड, 76

वस्तुतस्तु अक्रमो भवति शब्दः, क्रमजन्मा च भवति नादः। नादस्य क्रमजन्मत्वादेव शब्दः क्रमवान् भेदवान् वा दृश्यते.

**नादस्य क्रमजन्मत्वात् नाऽपूर्वो न परश्च सः।**
**अक्रमः क्रमरूपेण भेदावानिव जायते[1]।।**

एतत्तु सुस्पष्टमवधेयं यदेतच्छब्दस्वरूपे भेदपरिकल्पनं विचारसौकर्यार्थं प्रयोगदृष्ट्या एव आश्रितम्। सर्वात्मना अभिधायकस्तु शब्दः एक एव। अर्थावबोधने उभयस्यैव शक्तत्वात्। ध्वनिरहितस्य केवलस्य स्फोटस्य शब्दत्वव्यपदेशः केवलमौपचारिकः, शब्दानामर्थबोधनैकमात्रफलकत्वेन सुगमतया कार्त्स्न्येन तत्र तदभावात्।

अविचारिते अव्यक्तवर्णके रभसोच्चरिते केवले ध्वनौ शब्दत्वव्यपदेशोऽपि एतादृश एव। तेनाऽपि अर्थावबोधनाभावात्। क्वचित् एतादृशेन कस्यचिद् गृहीतशक्तिकस्य शाब्दबोधे सम्भवत्यपि किन्तु तत्र अनुशासनीयशब्दत्वं तु नास्ति। स्फोटस्य ध्वनेश्च पार्थक्येन ग्रहणं न सम्भवति। स्फोटरूपाभिन्नो ध्वनिः श्रोतृभिः गृह्यते.

**स्फोटरूपाऽविभागेन ध्वनेः ग्रहणमिष्यते'[2]**

भाषावैज्ञानिकदृष्ट्या प्रतीतपदार्थके ध्वनौ शब्दत्वं स्वीकुर्वाणस्य पतञ्जलेरपि अयमेवाशयः। पतञ्जलेरभिप्रायं स्पष्टयन् नागेशः प्रोवाच. 'लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वात् वर्णरूपः ध्वनिसमूह एव शब्दः'[3] इति। एतदेव भवति प्रायोगिकं शब्दस्वरूपम्। व्यवहारे पदार्थावगतये लोकाः तदेव शब्दस्वरूपं स्वीकुर्वते।

वस्तुतस्तु शब्दाभिव्यक्तेः साधनमस्ति ध्वनिः । वक्तुः पूर्वनिश्चितं शब्दसंस्क. ारं प्रकटयति ध्वनिसंघातः। ध्वनितोऽतिरिक्तम् एकम् अन्यत्तात्त्विकं शब्दस्वरूपमस्ति। पाणिनीये तन्त्रे मौलिकरूपेण एतदुपवर्णितं यत् सम्प्रत्ययनिमित्तकः ध्वनिसमुदायो भवति वैज्ञानिकः शब्दः। येन उच्चारितेन शब्देन प्रतिपत्तुः अर्थप्रतिपत्तिर्भवति स एव शब्दः। गौरिति शब्दे गकारौकाराभ्यामन्योऽस्ति कश्चिद् शब्दस्य प्रयोजकः। अथ गौरित्यत्र शब्दमनुसन्दधानस्य पतञ्जलेरयमेवाऽभिप्रायः। 'येनोच्चरितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः'[4] इति पतञ्जलेरुक्तं शब्दलक्षणं शब्दस्य स्फोटात्मकम् आन्तरिकं स्वरूपं संकेतयति।

शब्दानुशासनप्रयोजनकेऽस्मिन् पाणिनीये शब्दशास्त्रे शास्त्रीयसंज्ञां विहाय शब्दस्य स्वरूपं गृह्यते इति पाणिनिना स्वयमेव निर्देशः कृतः। तथाहि– स्वं रूपं शब्दस्याशब्दसंज्ञा[5]

---

1. वाक्यपदीय ब्रह्मकाण्ड, 48
2. वाक्यपदीय ब्रह्मकाण्ड, 81
3. उद्योते, पस्पशाह्निके महाभाष्ये
4. पस्पशाह्निके महाभाष्यम्
5. अष्टाध्यायी, 1-1-68

इति।

अग्नेर्ढक् इत्यादिविधिस्थलेषु अग्नि इति शब्दस्वरूपस्य तत्पर्यायाणां च ग्रहणे सम्प्राप्ते पाणिनिरयमाचार्यो नियमयति यत् अग्नीति आनुपूर्वीकस्य शब्दस्वरूपस्यैवात्र ग्रहणमुचितं नान्येस्येति। पाणिनिमते शब्दस्य स्वत्वद्वयमस्ति 1. रूपम्। 2. अर्थश्च। क्वचित् रूपस्य प्राधान्यमर्थस्य च गौणत्वम्। लोके व्यवहारसम्पादनाय अर्थकृतप्राधान्यमाश्रीयते इति भर्तृहरिरप्याह.

**लोकेऽर्थरूपता शब्दः प्रतिपन्नः प्रवर्तते। शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया[1]।।**

इति

शब्दशास्त्रे तु प्रक्रिया निर्वाहार्थं निर्देशस्थले शब्दगतस्य रूपस्यैव प्राधान्यं भवति, अर्थस्तु तत्र गुणभूतः । अदर्शनं लोपः[2] इत्यत्र अदर्शनशब्दस्वरूपस्य तत्पर्यायाणाञ्च योऽर्थो लोके प्रसिद्ध अदर्शनशब्देन स एवाऽर्थोऽभिप्रेतः। ढगादिस्थले अग्निशब्दातिरिक्तस्य शब्दस्य व्यावृत्यर्थं पाणिनिना स्वीकृत एष नियमः। स्वं रूपं शब्दस्याऽशब्दसंज्ञेति सूत्रं भाषमाणः पतञ्जलिः शब्दगतं स्वत्वद्वयम् एतत् स्वीकुरुते, अस्त्यन्यद् रूपाद् स्वं शब्दस्येति। किं पुनस्तत्? अर्थः' इति। ढगादिस्थलेषु शब्दार्थस्य व्यावर्तनाय पाणिनिना सूत्रे रूपपदं गृहीतम्। अत्र सूत्रे पाणिनिना अभिप्रेतः शब्दगतोऽर्थः एवास्ति शब्दस्य वैज्ञानिकं स्वरूपं स्फोटात्मकम्। रूपपदेन च ध्वन्यात्मकं व्यावहारिकं प्रायोगिकं वा शब्दस्वरूपमभिप्रेतम्। रूपपदेनात्र व्यक्तिविशेषोच्चरितः ध्वनिविशेष एव नाऽभिप्रेतः, अपितु रूपशब्देन ह्यत्र शास्त्रे शुकसारिकापुरुषादिभिरुदीरितासु विभिन्नासु तत्तच्छब्दव्यक्तिषु समवेतमग्निशब्दादिकं सामान्यं गृह्यते।

पाणिनिना अग्नेर्ढगित्यादिषु या अग्निशब्दरूपा व्यक्तिरुच्चारिता तस्याः सर्वोच्चारणेषु अनुगता अग्निसामान्यरूपा आकृतिर्वाच्या भवति। सामान्यस्य कार्यायोगश्च व्यक्तिद्वारको भवतीति रीत्या व्यवहारः सम्पद्यते। यदि चात्र सामान्यं विहाय व्यक्तिरेव गृह्येत तदा व्य. क्तीनामानन्त्यात् सर्वेषामग्न्यादिशब्दानामनुशासनकार्ये योगसम्भवः स्यात् यथा अनुकरणशब्दाः अर्थं जहति, ध्वन्यात्मकं स्वरूपञ्चादधते तथा अत्रापि शास्त्रे शब्दरूपं भवति असाधारणम्। अर्थस्तु साधारण एव शब्दान्तरैरपि तस्यार्थस्य प्रत्यायमानत्वात्। मात्राकलापो नाम अस्ति शब्दः। स एव च शब्दस्य रूपम्। एवञ्चात्र स्वरूपसूत्रे अर्थवतः शब्दस्य एकदेशः रूपवान् एव शब्दः अभ्युपगम्यते। अग्निसामान्ये अग्निविशेषे च स्वरूपे शक्तिमतः अग्निशब्दस्य एकदेशः रूपमात्रमिह शब्दस्वरूपशब्देन विवक्षितम्।

अर्थवदधातुरप्रत्ययः प्रातिपदिकमित्यत्र तु अर्थवदेव शब्दस्वरूपं गृह्यते। अतस्तत्र शब्दानां लोके प्रयोगार्हत्वस्य सम्पाद्यमानत्वात्। शब्दानाम् अर्थवच्छब्दस्वरूपस्य बोधनार्थं सम्बन्धग्रहोऽपेक्ष्यते, अनिर्ज्ञातसम्बन्धेन शब्देन अर्थज्ञानाऽसम्भवात्। शब्दस्य रूपप्रतीतौ

---

1. वाक्यपदीय वाक्यकाण्ड-133
2. अष्टाध्यायी 1-1-60

तु श्रोत्रेण ध्वनेः सन्निकर्षोऽपेक्ष्यते। शब्दस्य यद् रूपद्वयं वर्तते तच्छब्दस्वरूपग्राहकेण येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः इति पतञ्जलिवाक्येन सुस्पष्टं समर्थ्यते। येनोच्चारितेनेति कथनेन मात्राकलापरूपा शब्दस्याकृतिः विवक्षिता। सप्रत्ययो भवतीति वाक्यांशेन स्फोटात्मकोऽर्थो विवक्षितः। शब्दार्थयोर्नित्यसम्बन्धात् पार्थक्येन एतज्ज्ञातुं सुकरं न भवति। शब्दानुशासनार्थकेनानेन व्याकरणेन वाचमवच्छेद्य एतज्ज्ञातुं सुकरं भवति अत एवाह भर्तृहरिः, **'तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते'**[1] **इति।**

वैयाकरणशिरोमणिः ख्यातनामा भाषाशास्त्री भर्तृहरिः अपि शब्दस्य स्वरूपद्वयमेतत् सुस्पष्टमुपावर्णयत्। ध्वन्यात्मकस्य शब्दस्योच्चारणात् प्राक् प्रवक्तुः मनसि विवक्षारूपा शब्द भावना अनिवार्या भवति। शब्दभावनां विना प्राणवायोरूर्ध्वसमीकरणं कण्ठताल्वाद्यभिघातश्च कथञ्चिदपि न सम्भवति। शब्दभावना एव वक्तारं नियते व्यक्ते अर्थाभिधायके च शब्दे प्रयोजयति। अत आह. भर्तृहरिः.

**आद्यः करणविन्यासः प्राणस्योर्ध्वं समीकरणम्। स्थानानामभिघातश्च न विना शब्दभावनाम्**[2]।। एतयोः परस्परमभेदोपचारात् साङ्कर्य जायते। एनयोः पार्थक्येन ज्ञानं शास्त्रविदामपि श्रमसाध्यं भवति। यथा घटमह जानामीति प्रतिपत्तौ कम्बुग्रीवादिमदर्थबोधे ज्ञानस्वरूपं च सांकर्येण सन्तिष्ठेते तथा श्रुते शब्देऽपि शब्दभावानारूपोऽर्थः शब्दस्वरूपं च सन्तिष्ठेते।

**आत्मरूपं यथा ज्ञाने ज्ञेयरूपञ्च गृह्यते। अर्थरूपं तथा शब्दे स्वरूपञ्च प्रकाशते**[3]?

ज्ञातो मया घटः इति बोधे एतत् सुस्पष्टं प्रतीयते। आचार्यः भर्तृहरिः शब्दभावनात्मकमिमं शब्दं ध्वनिरूपस्य शब्दस्य निमित्तमिति व्याचष्ट। ध्वनिरूपश्च शब्दः श्रोतृभिः वाचकत्वेन गृह्यते.

**द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।**
**एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते**[4]।।

आन्तरोऽयं व्यक्तो जातो वागात्मा एव स्वस्य रूपस्य अभिव्यक्तये करणादिसंयोगात् लोके प्रसिद्धरूपेण शब्दत्वेन परिवर्तते.

**अथाऽयमान्तरो जातः सूक्ष्मो वागात्मनि स्थितः। व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते**[5]?

वक्त्रा वक्ष्यमाणशब्दस्य स्वरूपावधारणम् अर्थसन्निवेशश्च उच्चारणात् प्रागेव भवति। ध्वनिः केवलमनुग्राहयति पूर्ववितर्कितम्-

1. वाक्यपदीय ब्रह्मकाण्ड-13
2. वाक्यपदीय ब्रह्मकाण्ड-122
3. वाक्यपदीय ब्रह्मकाण्ड-50
4. वाक्यपदीय ब्रह्मकाण्ड-44
5. वाक्यपदीय ब्रह्मकाण्ड-112

**वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः। करणेभ्यो विवृत्तेन ध्वनिना सो? नुगृऽह्यते[1]?**

ध्वनेः शब्दोपकारकत्वादेव पतञ्जलिराचार्यः ध्वनिं शब्दगुणमिति व्याचष्ट। 'एवंतर्हि स्फोटः शब्दः, ध्वनिः शब्दगुणः[2] शब्दप्रादुर्भावे बुद्धेः मनसः प्राणस्य आस्यावयवानाञ्च योगः अतीवानिवार्यः भवति। बुद्धियोगाद् मनोयोगाच्च वागर्थवती भवति। प्राणयोगात् करणयोगात् च वाग् ध्वनिरूपा व्यक्ता भवति। देशभेदात् शब्दस्वरूपं त्रिविधं भवति एतच्च शब्दस्य स्थितित्रयमित्यपि वक्तुं शक्यते। पश्यन्ती विद्यते बुद्धिस्था, मध्यमा च प्राणस्था, वैखरी भवति करणस्था। पश्यन्त्यां ज्ञानमात्रस्यैवानुगमात् तस्याः बुद्धिस्थत्वं स्वीक्रियते। यथा अरणिस्थं तेजो भवति प्रकाशान्तरहेतुः तथा बुद्धिस्थः शब्दः वैखरीवाचः निमित्तं भवति -

**अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम्।**
**तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक्[3]॥**

मध्यमायां बुद्ध्या साकं प्राणवायुरपि गतिमायाति। अतो मध्यमा प्राणस्था इत्युच्यते। वैखर्यां प्राणवायुः तत्तत्करणेषु आहतः ध्वनिः भूत्वा श्रावणः सञ्जायते । अस्मात् कारणात् वैखरी करणस्था इत्यभिधीयते। एतत्समुदितस्यैव शब्दत्वम् अभिप्रेत्य पतञ्जलिराचार्यः अथ शब्दानुशासनमित्यत्र शब्दपदं प्रयुङ्क्ते।

शब्दस्वरूपमवधारयता एतदपि विचिन्त्यं यत् शब्दस्य प्रयोजनद्वयं भवति। तत्र प्रथमं ज्ञानम् द्वितीयं प्रयोगः इति । ज्ञानमस्ति स्फोटरूपम्। प्रयोगश्च धन्यात्मकः। एकः पूर्वपरयो[4]रिति सूत्रं भाषमाणः पतञ्जलिः शब्दज्ञानं शब्दप्रयोगञ्च अभीप्सितफलप्रदं व्याचष्ट। तथाहि 'शब्दस्यापि ज्ञाने प्रयोगे च प्रयोजनमुक्तम् किम्? एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति'[5] इति।

शब्दस्वरूपप्रसङ्गादत्र एतदप्यवधेयम्, प्रयोगेणाभिज्वलितः श्रावणः शब्दः अनुशासनदृष्ट्या द्विविधः भवति। व्युत्पन्नोऽव्युत्पन्नश्चेति तत्र व्युत्पन्नः शब्दः एकेषामाचार्याणां मते स्वीक्रियते। अव्युत्पन्नश्च अपरेषां मते। व्याडिना उभयपक्षेऽपि अर्थस्य वाचकः शब्दो व्याख्यातः तथाहि- वाचकः उपादानः शब्दव्युत्पत्तिकर्मणि प्रयोजकम्' इति स्वोपज्ञहरिवृषभवृत्तौ संग्रहनाम्ना धृतोऽयं गद्यांशः[6] अर्थाऽभिधानाऽर्थे शब्दस्योभयविधमपि स्वरूपमावश्यकं भवति। अन्तः शब्दो बौद्धो भवति। बाह्यश्च शब्दो ध्वन्यात्मकः। बौद्धस्य शब्दस्य ध्वनिरस्ति वाहनभूतः । ध्वनिना श्रोता अन्तःशब्दं गृह्णाति। उत्पन्ने ध्वनौ अन्तःशब्दः श्रोत्रेण ग्राह्यो भवति। यथा प्रकाशः जन्मानन्तरमेव अर्थप्रत्यायको जायते।

1. वाक्यपदीय ब्रह्मकाण्ड-47
2. महाभाष्यम्, 1-1-70
3. वाक्यपदीय ब्रह्मकाण्ड-47
4. अष्टाध्यायी, 6-1-84
5. म. भा. 6-1-84
6. वाक्यपदीय ब्रह्मकाण्ड-44

**वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः।**
**करणेभ्यो विवृत्तेन ध्वनिना सोऽनुगृह्यते[1]? इति।**

अर्थं सम्प्रत्याययितुं प्रवक्तारः प्रत्येतुं च श्रोतारः शब्देषु प्रवर्तन्ते। सततम् अर्थगत्यर्थं हि शब्दं स्वीकुर्वते वैयाकरणाः। अत एव निरर्थकेषु नाम शब्देषु नैव वैयाकरणाः सम्प्रवर्तन्ते। शब्दश्रवणोत्तरकालं यमर्थं प्रत्येति तस्य शब्दस्य स एवार्थ इति भर्तृहरिणा स्पष्टमुक्तम्-

**यस्मिन् तूच्चरिते शब्दे यदा योऽर्थ प्रतीयते।**
**तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम्[2]?**

वक्तृश्रोतृबुद्धिद्वयमध्यगा व्यवसायात्मिका भवति वाग्। अर्थप्रत्यायने वक्तुः अन्तिमो व्यवसायः श्रोतुश्च प्रारम्भिको व्यवसायः शब्दात्मको भवति। भर्तृहरिः वक्तुः बुद्धेः प्रवृत्तिं प्राक् शब्देषु यथा स्वीकुरुते गृहीतृणां व्यासायमपि तथैव शब्देष्वेव संगिरते।

**यथा प्रयोक्तुः प्राग् बुद्धिः शब्देष्वेव प्रवर्तते।**
**व्यवसायो गृहीतृणामेवं तेष्वेव जायते[3]?**

पतञ्जलिराचार्यो वागर्थौ अभिन्नौ मनुते। अर्थो हि वाचामन्तरङ्गभूता शक्तिः विद्यते। अवहिर्भूता हि शब्दार्थ इति मनुते पतञ्जलिः-

शब्दश्च शब्दाद् वहिर्भूतः अर्थोऽवहिर्भूतः'[4]। श्रुतेन शब्देनैकेन तत्त्वद्वयमवगम्यते इति स्वं रूपं शब्दस्याऽशब्दसंज्ञा इति सूत्रं भाषमाणः पतञ्जलिः प्रत्यपादयत्. 'अस्त्यन्यद् रूपात् स्वंशब्दस्येति। किं पुनस्तत्? अर्थः। शब्देनोच्चारितेनार्थो गम्यते गामानय, दध्यशानेति। अर्थः आनीयते, अर्थश्च भुज्यते। सोऽयमर्थः तात्विकदृष्ट्या द्वैविध्यं भजते- मुख्यः गौणश्च। तत्रादौ-

**1. मुख्यार्थः-**

लौकिकप्रवृत्या निवृत्त्या च शब्दानां सार्थक्यं निश्चीयते इति रीत्या सर्वोऽपि सार्थकः शब्दः स्वकीयं यत्किञ्चित् प्रवृत्तिनिमित्तमाधत्ते। यत् प्रवृत्तिनिमित्तमाश्रित्य यदा यः शब्दो लोके प्रवृत्तः यदि स शब्दः तदेवाऽभिदध्यात्तदा सोऽर्थो मुख्यः परिगण्यते.

**शब्दस्योच्चारणे स्वार्थः प्रसिद्धो यस्य गम्यते।**
**स मुख्य इति विज्ञेयो रूपमात्रनिबन्धनः[5]॥**

शब्दस्य अनेकविधं प्रवृत्तिनिमित्तं सम्भवति। गौरिति पदं जातिलक्षणं प्रवृत्तिनिमित्तमभिधत्ते।

1. वाक्यपदीय ब्रह्मकाण्ड-47
2. वाक्यपदीय ब्रह्मकाण्ड-329
3. वाक्यपदीय ब्रह्मकाण्ड-54
4. महाभाष्यम्, 1-1-66
5. वाक्यपदीय ब्रह्मकाण्ड-267

शुक्ल इति पदं गुणलक्षणम्, पाचक इति पदं क्रियालक्षणं राजपुरुष इति पदं सम्बन्धलक्षणम्, डित्थ डवित्थ इति पदञ्च स्वरूपलक्षणं प्रवृत्तिनिमित्तमभिलक्ष्य प्रयुज्यते । एतदेव च शब्दानां स्वार्थोऽप्युच्यते ।

**2. गौणोऽर्थः-**

यत् प्रवृत्तिनिमित्तमाश्रित्य यः शब्दः प्रवृत्तः स शब्दस्य मुख्योऽर्थः। स एव मुख्यः शब्दाऽभिधेयो यदा अर्थान्तरे समारोपितस्तदा स गौणोऽर्थ उच्यते। अत एवाह पतञ्जलिः। अर्थस्त्वर्थान्तरे समारोपितो यदा शब्दप्रवृत्तिनिमित्तं भवति तदा गौणव्यवहारः'[1] इति अर्थ-प्रकरणाद्यपेक्षोऽयं गौणार्थः शब्दान्तरैः सह युक्तो भवति। अत एवाह भर्तृहरिः-

**अर्थप्रकरणापेक्षो यो वा शब्दान्तरैः सह । युक्तः प्रत्ययात्यर्थं तं गौणमपरे विदुः[2]।।**

शब्दो यदा स्वप्रवृत्तिनिमित्ताच्च्युतः अर्थान्तराभिधानाय प्रकरणादिकमपेक्षते तदा प्रकरणादिना अवगतोऽर्थो गौणः। लक्ष्यार्थो व्यङ्ग्यार्थश्चोभावेव गौणौ अर्थौ भवतः। गौणे ह्यर्थे मुख्यार्थसम्बन्ध आवश्यको भवति। अत एवाह पतञ्जलिः शब्दो न कदाचित् मुख्यार्थपरित्यागेनार्थन्तरे प्रवर्तते'[3] इति मुख्यार्थो गौणार्थस्य निमित्तं भवतीति भर्तृहरिणाऽपि प्रतिपादितम्-

**स्वार्थे प्रवर्तमानस्य यस्यार्थे योऽवलम्बते।**
**निमित्तं तत्र मुख्यं स्याद् निमित्ती गौण इष्यते[4]।।**

एवञ्च केषाञ्चिन्मते गौणमुख्यार्थयोः निमित्तनिमित्तिभावः सम्बन्धः सन्तिष्ठते 'गोत्वानुषङ्गी वाहीके निमित्तात् कैश्चिदिष्यते' इति वाक्यपदीयस्य वाक्यकाण्डे भर्तृहरिः। मुख्यार्थे गौणार्थे च कार्यसम्प्रत्यये समुपस्थिते सति प्राधान्यात् मुख्यार्थे एव कार्यव्यवस्था सम्पाद्यते. 'गौणमुख्ययोः मुख्ये सम्प्रतिपत्तिः'[5] इति पतञ्जलिः। गौरनुबन्ध्यः इत्यत्र मुख्यार्थः सास्नादिमदर्थः एव अनुबन्ध्यते न तु बाहीकः। अतः अतस्मिन्नर्थे तदर्थस्य सम्प्रतिपत्तिः एव खलु गौणः अर्थः सम्प्रतीयते। चतुर्भिः प्रकारैः च अतस्मिन्नर्थे तदर्थस्य अवगतिः दृश्यते-'चतुर्भिः प्रकारैरतस्मिन् स इत्येतद् भवति'[6] इति पतञ्जलिः। एते चत्वारः प्रकाराः सन्ति-

1. तात्स्थ्यात् । 2. ताद्धर्म्यात् । 3. तत्साहचर्यात् । 4. तात्स्थ्यात् ।

मञ्चाः क्रोशन्ति, गिरिः दह्यते, इत्यादौ मञ्चस्य क्रोशनाऽसम्भवात् मञ्चशब्दः

---

1. महाभाष्यम्, 8-3-82
2. वाक्यपदीय ब्रह्मकाण्ड 264
3. महाभाष्यम्, 8-3-82
4. वाक्यपदीय ब्रह्मकाण्ड 265
5. महाभाष्यम्, 8-3-82
6. महाभाष्यम्, 8-3-82

स्थानविशेषरूपं स्वप्रवृत्तिनिमित्तं परित्यज्य मञ्चस्थं पुरुषविशेषम् अर्थम् आह। गिरेश्च दहनाऽसम्भवात् गिरिशब्दः गिरिस्थं द्रव्यविशेषमर्थमाह। वक्तुस्तत्रैव तात्पर्यात्। अत्र मञ्चशब्दः मञ्चास्थार्थे तथा गिरिशब्दः गिरिस्थद्रव्ये आरोप्यते।

1. ताद्धर्म्यात्–

जटिलं यान्तं यज्ञदत्तम् इत्याह इत्यत्र जटिले यज्ञदत्तव्यपदेशः समारोप्यते । यज्ञदत्ते यानि कार्याणि तानि जटिनि अपि दृश्यन्ते अतो जटी यज्ञदत्त इत्युच्यते।

2. तत्साहचर्यात्–

'यष्टीः प्रवेशय इत्यत्र यष्टीनां प्रवेशासम्भवेऽपि वक्तुः तात्पर्यानुपपत्तेः यष्टिशब्दः स्वप्रवृत्तिनिमित्तं परित्यज्य यष्टिसाहचर्यात् यष्टिधरान् अभिधत्ते।

3. तत्सामीप्यात्–

'गङ्गायां घोषः' इत्यत्र गङ्गापदं भगीरथखातावच्छिन्नं प्रवाहस्थलविशेषं स्वाभिधेयं प्रवृत्तिनिमित्तं पर्यत्यजत्। गंगायां घोषावस्थानाऽसम्भवात्। अतो गंगापदमत्र गंगासमीपस्थं तटविशेषमर्थं व्यनक्ति। अतो यथा शब्दोऽनुशास्यते तथैवार्थोऽपि अनुशासनीयः। भर्तृहरिणा व्याकरणेन अनुशासनीयस्य अर्थस्य द्वैविध्यमुपस्थापितम्। अपोद्धारपदार्थः स्थित-लक्षणार्थश्चेति। शास्त्रीयव्यवहाराऽनुपाती अपोद्धारपदार्थो व्याकरणस्य अनुशासनीयोऽर्थो विद्यते। अपोद्ध्रियते वाक्यार्थेभ्यः पृथक् क्रियते इति अपोद्धारपदं व्युत्पाद्यते। प्रकृत्यर्थः प्रत्ययार्थश्च अपोद्धारपदार्थेन अभिप्रेतः। अयं च शास्त्रीयोऽर्थः लोके व्यवहारविषयो न भवति। अन्वयव्यतिरेकाभ्यां प्रकृत्या प्रकृत्यर्थः प्रत्ययेन च प्रत्ययार्थः अवगम्यते। द्वितीयोऽर्थः स्थितलक्षणः। तेन स्थितलक्षणेन वाक्यार्थो विवक्षितः। तथाहि– स्थितलक्षणस्तु वाक्यरूपोपग्रहः कल्पितोद्देशविभागः विशिष्टः एकः क्रियात्मा विच्छिन्नपदार्थ-ग्रहणोपायप्रतिपाद्यः'[1] इति। स्थितलक्षणादेव अर्थात् अपोद्धारपदार्थरूपः विच्छिन्नार्थः प्रविभज्यते। पदानि सामान्यमर्थं प्रतिपादयन्ति, मिलित्वा च विशेषम्। पतञ्जलिमते सामान्येऽर्थे वर्तमानानां पदानां विशेषेऽर्थे यदवस्थानं तत् वाक्यार्थो विवक्षितः। पदार्थः कदापि स्थितलक्षणार्थो न भवति, तस्य वाक्यार्थे तिरोधानात्। स्थिरस्वरूपकस्य अर्थस्यैव स्थितलक्षणार्थत्वस्वीकारात्। वाक्यार्थस्तु न क्वापि तिरोदधातीति वाक्यार्थस्यैव स्थित-लक्षणार्थत्वम् एतत् सर्वं वाक्यपदीये सुस्पष्टं दरीदृश्यते। इति शम्।

---

1. स्वोपज्ञहरिवृषभटीका ब्रह्मकाण्डः, वाक्यपदीयम्

UGC - CARE Listed
अप्रैल–जून 2021

शोधप्रभा
वर्ष : 46, द्वितीयोऽङ्कः

# व्याकरणदर्शने शब्दस्वरूपम्

डॉ. मोहिनी आर्या,*
तेज प्रकाशः**

अस्ति जगदिदं शब्दाधीनम्, अस्मिन् जगति यत् किञ्चिदपि वक्तव्यं, श्रोतव्यं, कर्तव्यजातं वा भवति, तत् सर्वं शब्दायत्तं, शब्दानुविद्धं चास्तीति न खलु वर्तते तिरोहितं प्रेक्षावताम्। उक्तं हि परमवैयाकरणभर्तृहरिणा–

**अर्थक्रियासु वाक् सर्वा समीहयति देहिनः।**
**तदुत्क्रान्तौ विसञ्ज्ञोऽयं दृश्यते काष्ठकुड्यवत्।।[1]**
**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।[2]**

यदि शब्दतत्त्वम् इह लोके नास्थास्यत् तर्हि किङ्कर्तव्यविमूढो, मूकोऽभविष्यत् लोकोऽयम्। काव्यादर्शे महकविः दण्डी शब्दस्य माहात्म्यं वर्णयन् कथयति–

**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्येत।।[3]**

अतः सर्वप्रथमम् अयमेव प्रश्नोऽस्माकं समक्षं समुदेति यत् कः शब्दः? विषयेऽस्मिन् महाभाष्यकारपतञ्जलिः महाभाष्ये स्वयमेव प्रश्नमुपस्थापयन् स्वयमेव समाधानमपि प्रस्तौति। पस्पशाह्निक एव तेनोक्तम्, **"अथ शब्दानुशासनम्"**[4] इति। अत्र सर्वप्रथमम् "अथ शब्दानुशासनम्" व्याकरणाष्टकवाक्ये समागतानां पदानामर्थावबोधः आवश्यकः, यतोहि घटितज्ञानं प्रति घटकज्ञानं कारणं भवति। यदा शब्दः इत्यस्य ज्ञानं स्यात्, **अनुशासनम्** इत्यस्य च ज्ञानं स्यात् तदैव शब्दानुशासनम् इत्यस्य ज्ञानं जायते। अत एव महाभाष्यकारेण

---

*सहायकाचार्या, संस्कृतविभागः, देहलीविश्वविद्यालयः, देहली
**शोधच्छात्रः, संस्कृतविभागः, देहलीविश्वविद्यालयः, देहली

1. वाक्यपदीयम् 1/135
2. वाक्यपदीयम् 1/131
3. काव्यादर्शः 1/4
4. महाभाष्ये पस्पशाह्निकम्

शब्दपदार्थविषये प्रश्नः उपस्थापितः **"शब्दः कः?"** परन्तु पुनर्ध्यातव्यमस्माभिर्यन्महाभाष्यकारेण साक्षादत्र शब्दः कः इत्येवं प्रश्नो नोद्भावितः अपितु गभीरविवेचनधिया अमुना विशिष्टशैल्या **"गौरित्यत्यत्र शब्दः कः"**[1] इत्येवंविधः प्रश्नः उद्भावितः। अत्र विशिष्टशैलीप्रयोगे किञ्चिद्रहस्यम्, यद्धि निहितं सिद्धान्तत्वेन **"निर्विशेषं न सामान्यम्"** इति। यदि सामान्यविषयकोऽपि प्रश्नः स्यात् स च प्रश्नो विशेषमन्तरा ज्ञातुं नैव शक्यते, अत एव विशेषज्ञानम् अपेक्षते, तत एव महाभाष्यकारेण सामान्यविषयकः प्रश्नो नोद्भावितः। तेन विशेषतया पृच्छ्यते यद् गौरित्यत्र कः शब्दः? अत्राऽयं प्रश्नः कथं जातः? तदानीम् उच्यते यत् शब्दार्थयोरस्ति तादात्म्यम्, यतोहि योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः इति। गौरित्युच्यम.ाने प्रतिभासमानाः ये पदार्थास्तेषु पदार्थेषु शब्दः कः? इति प्रश्नः जायते, तदा पूर्वपक्षरूपेण महाभाष्यकारेण अनेके पक्षाः समुपस्थापिताः, यथा –

गौरित्यत्र शब्दं विज्ञातुमादौ महाभाष्ये प्रश्नो पृच्छ्यते "यत्तत्सास्नालाङ्गूलककुदखुर-विषाण्यर्थरूपं स शब्दः?" प्रत्युत्तरति च "नेत्याह। द्रव्यं नाम तत्।" शब्दपरिभाषामनवाप्य पुनराहासौ यत्तर्हि तदिङ्गितं चेष्टितं निमिषितमिति स शब्दः? एतस्यापि प्रतिषेधं करोति "नेत्याह। क्रिया नाम सा।" उत्तरमनवाप्य पुनर्ब्रवीति प्रश्नत्वेनोत्तरं महाभाष्यकारो "यत्तर्हि तच्छुक्लो नीलः कृष्णः कपिलः कपोत इति स शब्दः? किन्त्वस्यापि परिभाषणस्य निषेधं करोति "नेत्याह। गुणो नाम सः।" शङ्काकुलितव्यथितमानसो वैयाकरणो नैतावता प्रशाम्यति, प्रत्युत्तरञ्च दातुकामो ब्रूते "यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः?" किन्तु परमवैयाकरणो नीरक्षीरविवेकी अमुना समाधानेनासन्तुष्टः सन् प्राह "नेत्याह। आकृतिर्नाम सा[2]।" व्याकरणे आकृतिपदार्थेन जातेः अपि बोधो भवति, कुत्रचित् अवयवसंस्थानस्यापि बोधो भवति, कुत्रचित् प्रवृत्तिनिमित्तस्याप्यवबोधो भवति। एवम्प्रकारेण क्रमशो द्रव्यक्रियागुणाकृतयो व्याख्याताः, किन्तु शब्दः कः इति प्रश्नस्तु तादृशस्तदवस्थ एव। पुनर्महाभाष्यकारेण स्वयमेव समाधानमुपस्थाप्यते यत् **"येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स शब्दः[3]।"** अत्र येन इति पदेन ध्वनिना इत्यर्थो गृह्यते, अत्र करणे तृतीया, उच्चारितेन इत्यस्यार्थोऽस्ति प्रकाशितेन, अर्थात् **येन = ध्वनिना, उच्चारितेन = प्रकाशितेन** अर्थस्य अवबोधो जायते स एव प्रकाशितः यः शब्दः, **स शब्दः** स एव स्फोटात्मको वर्तते, अयं स्फोटात्मकः एव शब्दः। ध्वनिव्यङ्ग्यः प्रकाशितः, योऽयं स्फोटात्मकः शब्दः, तेन प्रकाशितेन स्फोटाख्येन शब्देन सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपस्य अर्थस्य बोधो जायते।

अत्रैका शङ्का उत्पद्यते यदा शब्दः स्फोटात्मकस्तर्हि महाभाष्यकारेण शब्दस्य या परिभाषा अकारि तस्यां परिभाषायां स्फोटशब्दस्य उल्लेखः कथं नास्ति? कथमस्माभिः येनोच्चारितेन

---

1. महाभाष्ये पस्पशाह्निकम्
2. उपरिवत्
3. उपरिवत्

सास्नालाङ्गूल... इतीयं परिभाषा स्फोटात्मकशब्दस्य स्वीक्रियते? अस्य समाधानं प्रदीयते यत् महाभाष्यकारः **"तपरस्तत्कालस्य"**[1] सूत्रभाष्ये स्वयं ब्रवीति– **"स्फोटः शब्दः ध्वनिः शब्दगुणः"** अर्थात् शब्दपदेन स्फोटः ग्राह्यः, ध्वनिस्तस्य स्फोटात्मकशब्दस्य गुणो वर्तते अर्थात् अभिव्यञ्जकः, प्रकाशको वर्तते, अनेन भाष्यवचनेन ज्ञायते यद् ध्वनिः स्फोटस्य व्यञ्जकः स्फोटश्च व्यङ्ग्यः इति। ध्वनिः प्रकाशकः स्फोटश्च प्रकाश्यः वर्तते। अत एव ध्वनिना उच्चारितः (प्रकाशितः) यो हि स्फोटात्मकः शब्दस्तेन शब्देन सास्नालाङ्गूलककुदखुर-विषाण्यर्थरूपस्य अर्थस्य प्रतीतिर्जायते। यस्मादर्थस्य प्रतीतिर्जायते स एव स्फोटः। अत उच्यते यत् – **"स्फुटति अर्थो यस्मात् इति स्फोटः अथवा स्फुट्यते = ध्वनिना अभिव्यज्यते यः सः स्फोटः**। एवं परिज्ञातं यत् शब्दपदेन व्याकरणदर्शने स्फोटात्मकशब्दस्य ग्रहणं भवति। अयं स्फोटशब्दो वैयाकरणनिकायेऽतीव प्रसिद्धो वर्तते।

वैयाकरणसम्प्रदाये स्फोटवादस्य प्रचलनं कदाप्रभृति समारब्धमिति निश्चप्रचं न शक्यते वक्तुं तथापि पाणिनीयव्याकरणात् प्रागपि स्फोटस्य प्रसिद्धिरासीत् यतोहि भगवता पाणिनिना अष्टाध्याय्यां सूत्रं कृतम् –**अवङ् स्फोटायनस्य।**[2] यस्मिन् स्फोटायानाचार्यस्य नामोद्धरणं कृतम्। सूत्रपठितस्फोटायनशब्दस्य अर्थः वर्तते – **स्फोटोऽयनं पारायणं यस्य स स्फोटप्रतिपादनपरो वैयाकरणः**[3]। तत्र स्फोटायननामकः कश्चन ऋषिः आचार्यो वाऽऽसीत्, तत्प्रतिपादितेन स्फोटनामकसिद्धान्तेन अमुना प्रसिद्धिरवाप्तेति व्याकरणनिकाये, यतोहि यो यस्य विषयस्य प्रवर्तकोऽनुयायी वा भवति, तस्य प्रसिद्धिस्तेनैव रूपेण भवति। नागेशभट्टेनाऽपि स्वकीयस्फोटवादनामके ग्रन्थे लिखितम् –

**वैयाकरणनागेशः स्फोटायनऋषेर्मतम्।**
**परिष्कृत्योक्तवांस्तेन प्रीयतां जगदीश्वरः॥**[4]

भगवता शङ्कराचार्येणापि स्फोटात्मकशब्दस्य चर्चा कृता। ब्रह्मसूत्रभाष्ये तैः व्याख्यातम्– **''स्फोटरूपनित्यशब्दात् क्रियाकारणफललक्षणसर्वं जगत् अभिधेयभूतम्"**[5] येन ज्ञायते यत् स्फोटशब्दः अन्यैः आचार्यैरपि स्वीक्रियते। यथा महाभाष्यकारेण शब्दद्वयं निरूपितं तथैव तमनुसरन् वाक्यपदीयकारोऽपि द्वावेव शब्दौ स्वीकरोति, भर्तृहरिणा वाक्यपदीये उक्तं यत्–

**द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।**
**एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते॥**[6]

अस्यां कारिकायाम् **"उपादानशब्देषु"** इत्यत्र निर्धारणे सप्तमी अस्ति, निर्धारणं च

1. महाभाष्यम् 1/1/70
2. अष्टाध्यायी सूत्रपाठः 6/1/123
3. तत्त्वबोधिनी 6/1/119
4. स्फोटवादः
5. ब्रह्मसूत्रस्य शाङ्करभाष्यम् 1/3/28
6. वाक्यपदीयम् 1/44

समुदाय एव भवति, अत्रापि उपादानशब्देषु अर्थात् शब्दसमुदायमध्ये द्वौ शब्दौ शब्दविदो विदुः = जानन्ति, तर्हि उपादानशब्देषु के शब्दा ग्राह्याः? तदुच्यते यत् परा-पश्यन्ती-मध्यमा-वैखरीरूपेण ये शब्दाः तेषु प्रकाशकत्वेन द्वौ शब्दौ ग्राह्यौ। अत्र **'उपादान'**-शब्दस्य अर्थो **वाचकशब्दः = प्रकाशनीयः शब्दः** वर्तते। अयमाशयो यत् वाचकशब्दो द्विविधः, एकस्तु श्रोत्रग्राह्यवैखरीरूपः स्फोटप्रकाशनसमर्थो ध्वन्यात्मकः शब्दः, अपरस्तु आन्तरः स्फोटोऽर्थप्रकाशनक्षमः। अत्र विचार्यते यदुपादानशब्दस्य कोऽर्थः? यतोहि व्याकरणशास्त्रे एकमेव तत्त्वं वर्तते 'शब्दतत्वम्'। व्याकरणशास्त्रम् अद्वैतं स्वीकरोति, तद्वादोऽस्ति शब्दाद्वयवादः यथा **सच्चिदानन्दब्रह्म, एकमेवाद्वितीयं ब्रह्म,** तथैव अत्रापि **शब्दतत्वम्** एव वर्तते तदेव ब्रह्म इति, अत एव भर्तृहरिणा प्रोक्तं यत् —

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**[1]

अत्र **अनादिनिधनम्** इत्यस्य अर्थः उत्पत्तिविनाशरहितम् = नित्यम्, आदिश्च निधनं च इति आदिनिधने, न विद्येते आदिनिधने यस्य तद् अनादिनिधनम् इति, तर्हि एतादृशः एव पदार्थः शब्दाभिधपदार्थोऽस्ति, स च व्याकरणशास्त्रे **'ब्रह्म'** इति पदेन स्वीक्रियते। एवम्प्रकारेण स शब्दः उत्पत्तिविनाशरहितः, अथ च अक्षरः अर्थात् व्यापकः वर्तते।

पुनरत्र शङ्काकुलितमानसैर्भूयतेऽस्माभिः यदक्षरपदेन तु ककारादिवर्णानामपि ग्रहणं कर्तुं शक्यते यदि ककारादिवर्णाः शब्दाः एव 'ब्रह्म' तदा ककारादिवर्णाः अनेकेः सन्ति, तेनेह ब्रह्मपदवाच्ये अनेकत्वम् उपजायते। चेदुच्यते — नहि, तत्र निमित्तनिमित्तिनोरभेदः, यतोहि ककारादिवर्णाः कार्यरूपेण प्रसिद्धास्तेषां कारणं परावाक्शब्दतत्त्वम्, यच्च ब्रह्म वर्तते। कारणकार्ययोरभेदात् कार्यगतधर्माः कारणेष्वपि आरोप्यन्ते। अतः अक्षरं ब्रह्म इति व्यवहारोऽस्माभिः क्रियते यथा अक्षरपदेन ओङ्कारस्य प्रणवस्य ग्रहणं भवति। अथ चाऽयं एक एव प्रणवस्त्रिधा विभज्यते, तस्यैव अक्षरपदेन ग्रहणं क्रियते। पुनः **'यतः प्रक्रिया जगतो विवर्तते'** अर्थात् अस्मात् शब्दब्रह्मणः जगतः प्रक्रिया विवर्तते। विवर्तशब्दस्यार्थः शास्त्रे **अतात्त्विकोऽन्यथाभावः विवर्तः**[2] प्रसिद्धम्। दर्शनशास्त्रे विवर्तः परिणामश्च वादद्वयं प्रसिद्धम्। परिणामशब्दस्य अर्थः — **तात्त्विकोऽन्यथाभावः परिणामः**[3], यथा- दुग्धस्य परिणामभूतं दधि वर्तते। अथ च विवर्तः कुत्र भवति? यथा — रज्जौ सर्पप्रतीतिः, शुक्तौ रजतज्ञानम्। इदं ज्ञानं भ्रमः, तर्हि सर्पाकारस्य या प्रतीतिर्जायते सा विवर्तभूता एव, एवमेव इदं जगत् अधिष्ठाने ब्रह्मणि प्रतीयते, तज्जगत् ब्रह्मणो विवर्तभूतम् अर्थात् अतात्त्विकरूपेण तद् ब्रह्म प्रतीयते। अत एव अवशिष्टः पदार्थः कः? ब्रह्म एव। यदा भ्रमनिरासो जायते तदा तदेव ब्रह्म अवशिष्यते, अतो कारणात् ब्रह्म एव सर्वम्, सर्वं ब्रह्ममयं जगदिति कथ्यते।

---

1. वाक्यपदीयम् 1/1
2. वेदान्तसारः
3. वेदान्तसारः

**उपादानशब्देषु शब्दौ शब्दविदो विदुः** कारिकायाम् अस्माभिर्विचार्यते यदुपादानशब्देन कस्य ग्रहणं भवति? पूर्वमेव निर्दिष्टं यच्छब्द एव तत्त्वं, तर्हि शब्दे योऽर्थः, शब्देन यस्यार्थस्य ज्ञानं भवति, तज्ज्ञानमारोपात्मकं न तु तत्त्वात्मकम्, यतोहि **'प्रक्रिया जगतो यतः विवर्तते'**, तस्माद् उपादानशब्दस्य अर्थः कः? अनेन ज्ञायते यदुपादीयते अर्थात् स्वरूपे = अधिष्ठाने अध्यारोप्यते = विवृत्यतेऽर्थोऽनेन यः स उपादानशब्दः अर्थात् अर्थो विवर्तो भवति येन शब्देन स शब्दः उपादानशब्दः। अस्मिन् पक्षे शब्दः अर्थस्य विवर्तोपादानभूतः, यदा शब्दात् बाह्यार्थस्य बोधो नहि भवति, अपितु तत्सजातीयस्य शब्दस्य बोधो भवति तदा उपादानशब्देन किं गृह्यते? यतोहि कुत्रचित् शब्दात् शब्दस्यैव बोधो जायते नाऽर्थस्य, नहि बाह्यार्थस्य, तदा उपादानशब्दस्य कोऽर्थः? यथा **'अग्नेर्ढक्'**[1] इति सूत्रेण सूत्रपठितेन अग्निशब्देन तत्सजातीयप्रयोगस्थस्य अग्निशब्दस्य बोधो भवति। अतोऽयमग्निशब्दः एवार्थभूतः, तस्मात्प्रयोगस्थादग्निशब्दात् 'ढक्'-प्रत्ययो विधीयते, अत्र उपादानशब्दस्य कोऽर्थः क्रियते? तदा समाधीयते यदत्रोपादानशब्दस्य अर्थः - उपादीयते = प्रतीयते स्वसजातीयशब्दादवगम्यते स उपादानशब्दः। अनया व्युत्पत्त्या उपादीयते = प्रतीयते इत्यत्र **'कृत्यल्युटो बहुलम्'**[2] इति सूत्रेण बाहुलकात् कर्मणि ल्युट्-प्रत्ययो विधीयते, एवम्प्रकारेणोपादानशब्दस्य व्युत्पत्तिद्वयमत्र कृतम्।

पुनरुच्यते यदुपादानशब्देषु द्वौ शब्दौ गृह्येते व्यङ्ग्यव्यञ्जकौ। अत्रेदमवधेयं यद् व्यङ्ग्यः उपादानशब्दो वर्तते तर्हि व्यञ्जकस्तूपादानशब्दः। एवं व्यञ्जकध्वनौ अपि उपादानशब्दस्य व्यवहारो जायते। यदा ध्वनौ उपादानशब्दस्य व्यवहारः क्रियते तदा उपादीयते = **स्वरूपे अध्यारोप्यतेऽर्थः** आहोस्वित् उपादीयते प्रतीयत इति उपादानः इत्युभयोर्विग्रहयोर्ध्वनेर्ग्रहणं कथं स्यात्? तदोच्यते उपादानशब्देन वैखरीशब्दस्यापि ग्रहणं स्यात्, तदा उपादीयते इत्यस्यार्थः क्रियते- **उपादीयते = श्रोत्रेन्द्रियेण गृह्यते यः सः उपादानशब्दः**। अत्र तथैव कर्मणि ल्युट् (कृत्यल्युटो बहुलम्[3]) परञ्च यदि करणे ल्युट्-प्रत्ययः स्यात् तदा उपादानशब्दस्य करणव्युत्पत्त्या **उपादीयते = गृह्यतेऽर्थोऽनेनेति उपादानशब्दः**, तदा व्यङ्ग्यव्यञ्जकयोः स्फोटध्वन्ययोः ग्रहणं भवति, अतः उपादानशब्देषु द्वौ शब्दौ शब्दतत्त्वज्ञाः विदुः = जानन्ति, एकः शब्दः निमित्तं वर्ततेऽपरश्चार्थबोधे प्रयुज्यते।

अत्र निमित्तशब्दः अपि व्याख्येयः- एकः श्रोता अपरश्च वक्ता भवति। यदा वक्ता ब्रूते तदा ध्वनिं जनयति, तत्र ध्वनेः कारणं भवति वक्तृहृदयस्थः स्फोटात्मकः शब्दः, स शब्दः एव ध्वन्यात्मकशब्दस्य अवबोधने कारणं वर्तते। अतः एकः निमित्तं शब्दानाम् अर्थात् वक्तृहृदयस्थितस्फोटात्मको यः शब्दः वैखरीरूपनिमित्तशब्दानां कारणं भवति। अपरोऽर्थे प्रयुज्यतेऽस्याः पङ्क्तेः अभिप्रायोऽस्ति यद् यदा वक्ता ध्वनिं करोति तदा श्रोता श्रोत्रेन्द्रियेण ध्वनिं गृह्णाति। अस्यां स्थितौ श्रोत्रेन्द्रियेण गृह्यमाणः ध्वनिः स्फोटम् अभिव्यञ्जयति, अनेन

1. अष्टाध्यायी-सूत्रपाठः 4/2/33
2. अष्टाध्यायी-सूत्रपाठः 3/3/133
3. उपरिवद्

स्फोटोऽभिव्यक्तो भवति, अभिव्यङ्ग्यः स्फोटः अर्थबोधने क्षमः। तदा अपरोऽर्थे प्रयुज्यते अर्थात् यः हृदयस्थितस्फोटात्मकः शब्दः वक्तृवैखरीध्वनिना अभिव्यज्यते, स स्फोटात्मकः शब्दः अर्थबोधने क्षमः भवति = समर्थो भवति। अत एव उच्यते – **'एको निमित्तं शब्दानाम् अपरोऽर्थे प्रयुज्यते'।**

अस्मिन् विषये एका इयमपि शङ्का जायते यत् शब्दः कथं वैखरीध्वनिना अभिव्यक्तो भवति? स्फोटस्तु एकः, नित्यः ततोऽनेन स्फोटात्मकशब्देन क्रमेण कथं बोधो जायते? यतोहि स्फोटस्तु निरवयवः, निष्क्रमः, निष्क्रियः, तस्मात् स्फोटात् सक्रमस्य अर्थस्य बोधः कथं भवति? तदा उच्यते यद् यो हि ध्वनिः वर्तते स ध्वनिः स्फोटम् अभिव्यञ्जयति। ध्वनिः सक्रियः, सावयवः, सक्रमश्चास्ति। अत एव ध्वनिगतभेदाः अभिव्यञ्जकगतभेदाः अभिव्यङ्ग्ये स्फोटे आरोप्यन्ते येन ध्वनिगतभेदात् स्फोटोऽपि सक्रमः, सावयवः, सक्रियश्च भवति।

तत्र पुनरन्यः प्रश्नः समुदेति यद्ध्वनेः उत्पत्तिविनाशौ भवतः तदा स्फोटस्य अभिव्यक्तिः कथममुना? यथा अस्माभिः यदा 'घट' इति उच्यते तदा आदौ 'घ्' इति ध्वनिः जायते, तदनन्तरं क्रमशः घकारोत्तरवर्ती **अकारध्वनिः, टकारध्वनिः** पुनः **अकारध्वनिः** इति, परं ध्वनेः समुदायस्तु न जायते तर्हि स्फोटस्य अभिव्यक्तिः केन प्रकारेण जायते? तदा उच्यते यदा घकारध्वनिः भवति, तदा घकार इति स्फोटः **अभिव्यक्तो** भवति, पुनः अकारध्वनिः भवति, तदा स अभिव्यक्ततरो भवति, यदा अन्तिमो ध्वनिः जायते, तदा स्फोटः **अभिव्यक्ततमो** भवति, तर्हि अभिव्यक्ततमेन अन्त्येन ध्वनिना सः स्फोटः अर्थबोधने समर्थो भवति।

मीमांसीयशाबरभाष्ये शब्दस्वरूपं प्रतिपादितम्, "अथ गौरित्यत्र कः शब्दः? गकारौकार-विसर्जनीया इति भगवानुपवर्षः। श्रोत्रग्रहणे ह्यर्थे लोके शब्द-शब्दः प्रसिद्धः।" अर्थात् गकारादीनां श्रोत्रग्राह्यत्वात् शब्दशब्दसाध्याः किन्तु समस्येह सम्मुखीभवति यदिमेऽर्थप्रत्यायनेऽक्षमाः एकैकाक्षरविज्ञानेऽनर्थलाभात् अक्षरादन्यत्वाच्च। अतः समादधति ते "यदा गकारो न तदौकार-विसर्जनीयौ। यदौकारविसर्जनीयौ न तदा गकारः। अतो गकारादिव्यतिरिक्तोऽन्यो गोशब्दोऽस्ति यतोऽर्थप्रतिपत्तिः स्यात्"। मीमांसका अपीह गोशब्दार्थप्रतिपत्तिकरं वर्णं शब्दत्वेन मन्वत इत्यर्थः।

नैयायिकैः उच्यते यद् **'ध्वनिः शब्दः'** स शब्दः अनित्यः, यदि शब्दोऽनित्यः वर्तते चेदर्थस्य बोधो कथं भवति? यथा 'राम' इति उच्यते तर्हि तदर्थापत्तिनिरूपितशक्तिः का? रकारे वर्तते आहोस्वित् आकारे वर्तते? यदि रकारे वर्तते चेदन्ये ये ध्वनयस्तेषाम् उच्चारणवैयर्थ्यं स्यात्, यदि अन्तिमः ध्वनिः तस्यार्थस्य बोधकः वर्तते तदा पूर्वपूर्वध्वनेरुच्चारणस्य वैयर्थ्यं स्यात्। अतः तैर्निरूप्यते यदा रकारध्वनिः जातः, तस्मात् ध्वनेः संस्कारः उत्पद्यते, तस्मात् संस्कारात् अर्थस्य अवबोधो जायते, एवमेव यदा आकारध्वनिः जातस्तस्मात् ध्वनेः संस्कारः जायते, तदा आकारस्य ज्ञानं जायते, एवमेव मकारध्वनिः, अकारध्वनिः च। अत्र अन्ये आचार्याः मन्यन्ते यद् यदा संस्कारः जायते तदा संस्कारे तु व्यतिक्रमोऽपि जायते, यथा– यदा नदी इत्युच्यते तदा संस्कारव्यत्ययात् दीन इत्यस्यापि बोधो स्यात्, तथैव यदा रसः इत्युच्यते तदा संस्कारव्यत्ययात् सरः इत्यस्यापि बोधो भवितुं शक्यते, तर्हि तैरव्यवहितोत्तरत्वसम्बन्धेन शब्दानामनुबन्धनमत्र

क्रियते, तथैव अत्रापि उच्यते यद् यदा घट इत्यस्योच्चारणं क्रियते, तदा सर्वप्रथमं घकारध्वनिः भवति, तदा घ् इति स्फोटो जायते, पश्चाद् अकारध्वनिः, तदा अकाररूपः स्फोटः, तदनन्तरं टकारध्वनिः, टकाररूपः स्फोटो भवति, एवमेव पश्चात् अकारध्वनिः, अकारध्वनेश्च स्फोटो जायते। अत्रापि यो हि क्रमः वर्तते तत्क्रमेऽपि व्यत्याशा भवितुं शक्यते तस्य समाधानं दीयते यदत्र क्रमो न विद्यते अपितु घकाराद् घट इत्यस्य अभिव्यक्तिर्जायते सा चाभिव्यक्तिः अनुद्भूता भवति, तस्य स्थूलत्वं तदैव जायते यदा अन्तिमो ध्वनिः उत्पद्यते। अत एव उच्यते वैयाकरणैः अभिव्यक्तः स्फोटः, अभिव्यक्ततरः स्फोटः, अभिव्यक्ततमः स्फोटश्च। अत्र क्रमः नास्ति यत्र क्रमः जायते तत्र क्रमविन्यासे पूर्वापरे व्यत्याशा भवितुं शक्यते। परं चात्र स्फोटाभिव्यक्तौ क्रमस्य उपयोगिता न वर्तते, अपितु तत्र अभिव्यक्तेः उद्भूतत्वम् अनुद्भूतत्वं वर्तते। अत एव यः अन्तिमः ध्वनिः जायते तदा स्फोटः अभिव्यक्ततमो भवति, तेन अभिव्यक्ततमेन स्फोटेन अर्थस्य बोधो जायते। अत एव वाक्यपदीयकारेण उक्तम्–

**यथानुवाकः श्लोको वा सोढत्वमुपगच्छति ।**
**आवृत्या न तु स ग्रन्थः प्रत्यावृत्ति निरूप्यते ।।**[1]

यथा यदा श्लोकः कण्ठस्थीक्रियते तदा कया आवृत्त्या स श्लोकः बुद्धौ समायाति इति वक्तुं न शक्यते तथैव अत्रापि तयैव रीत्या 'घट' इति पदं केन ध्वनिना सोढत्वमुपैति इति वकतुं न शक्यते, तत्र क्रमिकता नास्ति, दार्ढ्यं जायते, सोढत्वमुपजायते, अभिव्यक्ततमत्वं भवति। अत एव अत्र संस्कारक्रमः नास्ति, यत्र क्रमः वर्तते तत्रैव अयं दोषः उद्भावनीयः यत् क्रमस्य व्यत्याशो दृश्यते। एवमत्र विचार्यते यदयं स्फोटात्मकः शब्दः अर्थबोधने कारणत्वेन वर्तते। अत्र एकः प्रश्नः समुदेति यत् स्फोटात्मकशब्दस्य प्रकल्पना अस्माभिः कथं क्रियते? तर्हि उच्यते यदि स्फोटात्मकः शब्दः न स्यात् तदा शक्त्याश्रयः कः स्यात्? यतोहि ध्वनिरनित्यः, सः शक्त्याश्रयः भवितुं नैवार्हति। अत एव तादृशः कश्चन समुदायः भवेत् यस्य **प्रातिपदिकसंज्ञा** स्यात्। **'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'**[2] अर्थात् तत्र अर्थवच्छब्दरूपं यद् वर्तते, तदेव प्रातिपदिकसञ्ज्ञकं भवितुमर्हति। तत्र च अर्थवत् शब्दरूपं किं वर्तते? यत्र समुदायः स्यात् स समुदाय एव अर्थवान् शब्दः वर्तते, तस्यैव समुदायस्य प्रातिपदिकसञ्ज्ञा भविष्यति। अथ च समुदायरूपः शब्दः ध्वनौ सम्भवो नास्ति, स समुदायस्तु स्फोटात्मकशब्द एव वर्तते, तत्सामर्थ्यसमुदायप्रतीतिः स्फोटात्मकशब्द एव उपलभ्यते, अत एव स्फोटात्मकशब्दस्य यो हि सिद्धान्तो वैयाकरणैः प्रतिपादितः, स श्रेयान्। अत्र ध्वनिः स्फोटम् अभिव्यञ्जयति तर्हि ध्वनिः व्यञ्जकः, स्फोटश्च व्यङ्ग्यः। अत एव ध्वनिस्फोटयोर्मध्ये व्यङ्ग्यव्यञ्जकभावसम्बन्धः, प्रकाश्यप्रकाशकभावसम्बन्धश्च स्तः। अत एव ध्वनिरपि द्विविधः **प्राकृतो वैकृतश्च।** स्फोटः प्राकृतध्वनिना अभिव्यक्तो भवति यतोहि प्राकृतध्वनिः यथा- घण्टानादः क्रियते तेन घण्टानादेन यो हि प्रथमो ध्वनिः जायते स ध्वनिः प्राकृतः ध्वनिः।

---

1. वाक्यपदीयम् 1/84
2. अष्टाध्यायी सूत्रपाठः 1/2/45

तदनन्तरं यो हि घोषो भवति स ध्वनिः वैकृतध्वनिः। तथैव वैखर्या अपि भेदद्वयं वर्तते, प्रथमो ध्वनिः स्फोटस्य प्रकृतिभूतस्य ध्वनिः वर्तते, तत्र प्राकृतध्वनिरेव स्फोटस्य ग्रहणे कारणमिति। स ध्वनिरेव स्फोटे आरोप्यते = प्रतीयते, न तु वैकृतध्वनेः भेदः स्फोटे आरोप्यते। प्राकृतध्वनेः को भेदः? तत्र ह्रस्वदीर्घप्लुतभेदाः प्राकृतध्वनेः सन्ति, स भेदः स्फोटेऽपि आरोप्यते। अथ च वाक्यपदीयकारेण भगवता भर्तृहरिणा उक्तम् –

**स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।**
**प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते ॥**[1]

वैकृतध्वनेरपि द्रुतमध्यमविलम्बितभेदाः। स्फोटः वस्तुतः भेदरहितः तथापि तत्र प्राकृतध्वनेः भेदः प्रतीयते। यद्यपि स्फोटस्य अक्रमे, निरवयवे, निष्क्रमे सत्यपि असौ सक्रमपदार्थस्य उत्पत्तौ कारणं कथं सम्भवति? अस्मिन् विषये दृष्टान्तमाध्यमेन सुष्ठु प्रतिपादयति आचार्यो भर्तृहरिः –

**आण्डभावमिवापन्नो यः क्रतुः शब्दसञ्ज्ञकः।**
**वृत्तिस्तस्य क्रियाभूता भागशो भजते क्रमम् ॥**[2]

अर्थात् यथा प्राथमिकस्थितौ अण्डो निष्क्रमो निरवयवश्च भवति परञ्च तस्य अभिव्यक्तिकाले तस्मिन् क्रमशः सक्रियता, सक्रमता पूर्वापरभावश्च जायन्ते तथैव अयं स्फोटः यः हृदयस्थितः हृदयावच्छिन्नाकाशे स्थितः शब्दः निष्क्रियः निष्क्रमः वर्तते। तथापि अयं क्रतुः शब्दब्रह्मणः एका सञ्ज्ञा अर्थात् श्रेष्ठः पुरुषः अस्ति। तर्हि शब्दब्रह्म आण्डभावमिवापन्नो भवति अर्थात् यथा अण्डः अभिव्यक्तिकाले सक्रमो तथैव अयं स्फोटोऽपि अभिव्यक्तिकाले वैखरीध्वनिना सक्रमः, सक्रियो भवति। पूर्वापरभावयुक्तेन अयं स्फोटो प्रतीयते, वस्तुतः अयं प्रतीयते न तु इयं स्थितिरस्य स्वाभाविकी। चतस्रः वाचः परापश्यन्तीमध्यमावैखर्यः सन्ति। तत्र परावाक् मूलचक्रस्था वर्तते। अत्र परब्रह्मत्वेन परावाक् उच्यते, पुनः तदेव शब्दात्मकब्रह्म पश्यन्त्यां नाभिस्थितं पश्यन्तीसञ्ज्ञकम्, हृदये च मध्यमावाग्रूपतां सम्प्राप्नोति। तदा तद्ब्रह्म स्फोट इति सञ्ज्ञया व्यवह्रियते, यदा तद् ब्रह्म वायोः संयोगेन कण्ठताल्वाद्यभिघातजन्यं भवति तदेव ब्रह्म वैखरीसञ्ज्ञया अभिधीयते।

वस्तुतः शब्दब्रह्म एकमेव वर्तते, परं तस्योपाधिभेदाः भवन्ति। अस्माकं व्याकरणशास्त्रे यद् आराध्यभूतम् उपासनीयं च तत्त्वं वर्तते तत् शब्दब्रह्म एव। तेन महता देवेन सायुज्यम् इष्यते, तेन शब्दतत्त्वेन अस्माकं सायुज्यं स्यादित्येतदर्थं शब्दतत्त्वम् उपास्यते।

---

1. वाक्यपदीयम् 1/77
2. वाक्यपदीयम् 1/51

UGC - CARE Listed
अप्रैल-जून, 2021

शोधप्रभा
वर्ष : 46, द्वितीयोऽङ्कः

# उपनिषत्सु समाहितानां मनोवैज्ञानिक-सूत्राणाम् आलोचनात्मकम् अध्ययनम्

डॉ. श्रुतिकान्तपाण्डेयः*

**शोधसारः**

मनो हि भारतीय-परम्परायाम् अन्तःकरणस्य अभिन्नांशत्वेन मन्यते। सामान्यतया अस्य कृते 'मानसं, चित्तं, प्रज्ञा, धीः, मतिः, प्रवृत्तिचेत्यादीनां शब्दानामपि प्रयोगः दृश्यते परं वस्तुतया मनसः कार्यव्यापारमवेक्ष्य अन्यानि नामानि समीचीनानि नैव स्वीकृतानि। मनसः विषये संस्कृतसाहित्ये प्रभूतं बहुविधं च विवरणं प्राप्यते। यजुर्वेदस्य चतुस्त्रिंशत्तमे अध्याये मनसः यत्स्वरूपं व्याख्यातं तद्धि अखिलविश्वे मानकत्वेन स्वीक्रियते। परं तस्यापेक्षया उपनिषत्सु उल्लिखितानां मनोवैज्ञानिकसूत्राणां ख्यातिः स्वल्पा एवास्ति। तेषामेव सूत्राणाम् उद्घाटनमालोचनं चास्य शोधपत्रस्य लक्ष्यम्।

शोधपत्रेऽस्मिन् शांकरभाष्योपेतानाम् उपनिषदां मनोवैज्ञानिकसूत्राणां पञ्चवर्गेषु सङ्कलनं सम्पादितम्। वर्गाणामेतेषां नामानि क्रमशः मनसः उत्पत्तिः, मनस्स्वरूपं, वासस्थानं, कार्यव्यापारः, महत्त्वोपयोगः चाऽवर्तन्त। एतेषु विविधोपनिषद्भ्यः सप्तदशोद्धरण ाानि सङ्कलितानि। उद्धरणेषु उपलब्धानां तथ्यानां साम्याधारितं विश्लेषणं प्रतिवर्गं पृथकतः सम्पादितम्। अनन्तरं च तेषां सम्भूय संश्लेषणेन शोधनिष्कर्षः अवाप्तः।

उपनिषत्सु मनोविज्ञानसम्बद्धानि सप्तदशोद्धरणानि अवाप्तानि। एतेषु शब्दप्रमाणग्रन्थेषु मनसः उत्पत्तिः, परमात्मनः तपोबलेन व्याख्यातास्ति। सर्वप्रमुखमस्य कार्यं बुद्धीन्द्रियाणां माध्यस्थ्यम् आख्यातम्। एतत् हि शरीरस्य मध्यभागे अंगुष्ठमात्रे हृदयस्थले स्थापितम्। मनसः कार्यं संकल्पविकल्पैः बुद्ध्याः समक्षमर्थस्थापनम् इन्द्रियनिग्रहणं च प्रकीर्तितम्। मानवजीवनस्य इहामुत्राणाम् उद्देश्यानामवाप्तये मनसः शिवसङ्कल्पत्वं वशीकरणं च परमोपायत्वेन निगदिते स्तः। एवं हि मनोविज्ञानस्य विविधपक्षाणामुद्घाटनेन उपनिषद्-ग्रन्थाः मनुष्यमात्रस्य मार्गदर्शनं व्याहरन्ति।

---

* विभागाध्यक्षः एमिटी-संस्कृताध्ययन-शोध-संस्थानम्, एमिटी-विश्वविद्यालयः, नोएडा, उत्तरप्रदेशः,

**बीजशब्दाः** - उपनिषद्, मनः, मनोविज्ञानं, सङ्कल्प-विकल्पौ, इन्द्रियनिग्रहः।

**परिचयः** - वेदो हि सर्वसत्यविद्यानाम् आदिमूलत्वेन प्रतिपादितः महर्षि-दयानन्देन। वेदेभ्यः निःसृताः वेदाङ्गोपवेदाः, ब्राह्मणान्यारण्यकोपनिषदः, सूत्रस्मृत्यादयः भारतीय-धर्मदर्शन- संस्कृतीनां आधारभूताः इति नाऽत्रसंशयः। एतेषु उपनिषत्द्ग्रन्थाः अध्यात्मसन्दर्भेषु सविशेषं समादृताः। पुरा वेदज्ञैः ऋषिमुनिभिः सततं तपसा ध्यानाभ्यासेन चाऽनुभूतं यद्ज्ञानं मुमुक्षुभ्यः शिष्येभ्यः चोपदिष्टं तस्यैव संग्रहः उपनिषत्सु विहितः। उपनिषत्सु प्रमुखतः आत्मपरमात्म-श्रेयः-प्रेयो-बन्धमोक्षादीनां ज्ञानं विविधाऽनुक्रमैः उपदिष्टमस्ति। परं प्रसङ्गत्वेन अन्येषामपि विषयाणां विवरणम् एतेषु उपलब्धं भवति येषु मनोविज्ञानमपि अन्यतमं वर्तते।

उपनिषत्सु मनसः मनोविज्ञानस्य च विषये अनेके विषयाः चर्चिताः सन्ति। एतदन्तर्गतं मनसः शक्तिः, स्वरूपं, वासस्थानं, कार्यं, महत्त्वादिविषयेषु वर्णनं प्राप्यते। एतेषां विषयाणाम् उद्घाटने कथावर्णनं, प्रश्नोत्तरं, कथोपकथनम्, उपदेशादीनां विविधमाध्यमानां च प्रयोगः विहितोऽस्ति। एतेषु वर्णनेषु परस्परं भिन्नत्वम् असाम्यं वापि प्रत्यक्षतया प्रतीयते परं वैमत्ये सत्यपि तेषु विपर्ययः विरोधः वा नास्ति अपितु सर्वेषां मतानां समन्वयेन मनसः अशेषस्वरूपं स्पष्टं जायते। मनसः एतत्स्वरूपस्य साम्यं वेदब्राह्मणारण्यकेषु दर्शनस्मृत्यादिषु चापि ग्रन्थेषु प्राप्यते येन उपनिषत्सु वर्णितस्य मनसः स्वरूपस्य प्रामाण्यं सुतरां स्थाप्यते।

अखिलजीवमण्डले मानवानां कृते मनसः अस्तित्व-स्वरूप-सन्तोलन-शिवसङ्कल्पत्वादीनां विशिष्टं स्थानमस्ति। मनसः माध्यमेनैवात्मा धर्माधर्मेषु प्रवृत्तः जायते। एतेनैव कारणेन 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः' इत्येतादृशाः उक्तयः लोकविश्रुताः। मनसः संयमस्य आवश्यकता तु सर्वेष्वेव जीवनव्यवहारेषु भवति परं श्रवणमनन-स्वाध्यायतपश्चर्यादिषु मनोवृत्तीनां निग्रहणं सर्वथा निर्णायकं भवति। पुरा मनीषिभिः मनसः स्वरूप-शक्तिसामर्थ्यादीनां गभीराध्ययनं विहितं येन जीवनस्य ऐहिकामुत्राणां लक्ष्याणां साधनं सुकरं भवेत्। तैः आख्यातं यदस्माकं मनः जन्मान्तरेषु सञ्चितानां विषयवासनानाम् आकरः अस्ति। एतेषामेव प्रारब्धत्वेन प्रस्फुटनेन च जनः विविधेषु करणीयाकरणीयेषु कार्येषु प्रवृत्तः जायते। तासां विषयवासनानाम् अभिज्ञानं विधाय शुभवृत्तीनां पोषणेन अशुभानां च प्रशमनेन मानवजीवनस्य साफल्यं सुनिश्चितं भवति।

वेदेषु स्पष्टतः निगदितं यन्मनसः निग्रहणं विना किमपि कार्यं कर्तुं न शक्यते। यजुर्वेदस्य शिवसङ्कल्पसूक्ते मनसः स्वरूपमुदाहृत्य प्रार्थितं यन्मनः "यद्धि दूरंगमं ज्योतिषां ज्योतिरेकं, येनापसः धीराः मनीषिणः यज्ञेषु विदथेषु च कर्माणि कृण्वन्ति, यदपूर्वं यक्षमन्तः प्रजानां, यज्ज्योतिरन्तरमृतं प्रजासु, यस्मान्नृते किंचन कर्म न क्रियते, येनामृतेनेदं सर्वं भूतं भुवनं भविष्यत्परिगृहीतम्, येन पंचेन्द्रिय-बुद्धिरात्मायुतः सप्तहोतृयज्ञस्तायते, यस्मिन् ऋक्सामयजूंषि रथनाभावराविव प्रतिष्ठिताः, यस्मिन् प्रजानां सर्वं चित्तमोतं, सुषारथिरश्वानिव यन्मनुष्याः अभिषुभिर्वाजिनऽइव नेनीयते; तत्हृत्प्रतिष्ठं अजिरं जविष्ठं

मे मनः शिवसंकल्पमस्त्विति।''

एतेन ज्ञायते यन्मनो हि मानवानां कृते परमात्मनः सर्वोत्कृष्टसाधनं येन हि मानवः अभ्यासवैराग्याभ्यां धर्माचरणेन जीवनलक्ष्यसाधने समर्थः।

मानवजीवनस्य साफल्ये मनोविज्ञानस्य योगदानमनुप्रेक्षणीयमस्ति। अद्यत्वे मानवानां वैयक्तिक-सामाजिक-शैक्षिक-व्यावहारिक-व्यावसायिका-दिषु आयामेषु मनोविज्ञानस्य विविधपक्षाणां महती गुरुता स्वीक्रियते। सामान्यतस्तु मनोविज्ञानान्तर्गतं मनसः स्वरूप-व्यापारप्रक्रियादीनाम् अध्ययनं क्रियते परमाधुनिकसन्दर्भेषु एतस्य सन्तोलनं रोगाणां नियन्त्रण-निस्तारणोपशमनं मनोभावानाम् अवबोधनं संयमादिक्षेत्रेषु च विशेषावधानं प्रदीयते।

ज्ञानस्यावाप्तिर्विश्लेषणं प्रयोगश्च प्रथमतः इन्द्रियाणां माध्यमेन बुद्धेः कार्यक्षेत्रमस्ति परं मनसः योगं विना इन्द्रिय-सन्निकर्षः सम्भाव्यः न भवति। अनेन सिध्यते यद्बौद्धिक-शारीरिकाणां वा व्यापाराणां यथेष्टं सम्पादनाय मनसः सामञ्जस्यमनिवार्यं भवति। मनोविज्ञानस्य एते सिद्धान्ताः उपनिषत्स्वपि विस्तरेण उल्लिखिताः। परमधिकांशजनाः एतेषु वर्णितानां मनोवैज्ञानिकसूत्राणां विषये अनभिज्ञाः येन उपनिषदां बहुपक्षीयं महत्त्वं उपेक्षितं जायते।

अस्य शोधपत्रस्य माध्यमेन उपनिषत्सु विद्यमानानां मनोविज्ञान-सम्बद्धसूत्राणां क्रमशः प्रदर्शनेन एकतस्तु मनसः विषये एतेषु शब्दप्रमाणग्रन्थेषु सम्वलितानां सूत्राणाम् उद्घाटनं भविता, युगपदेव, उपनिषदां बहुमुखीयं स्वरूपमपि सार्वजनिकं भविष्यति।

**शोधविधिः**

अस्यानुसन्धानस्य प्रकृतिः प्राग्ग्रन्थेषु सम्वलितानां मनोवैज्ञानिकतथ्यानां विश्लेषणेन सम्बद्धास्ति। अस्यान्तर्गतम् उपनिषत्सूपलब्धानां मनोवैज्ञानिकसूत्राणाम् अन्वेषणविश्लेषणम् अपेक्षितमित्यवधार्य भाष्यकारेण आदिशंकराचार्येण व्याख्यायितासु एकादशोपनिषत्सु मनस्सम्बद्धानां तथ्यानां सङ्ग्रहः सम्पादितः। उपलब्धानां सूत्राणां सङ्ग्रहणार्थं मनसः उत्पत्तिः, मनस्स्वरूपं, वासस्थानं, कार्यव्यापारः, महत्त्वम्, उपयोगः चैतानां पञ्चवर्गाणां निर्धारणं कृतमासीत्। एतेषु पञ्चवर्गेषु सङ्ग्रहीतानां तथ्यानां प्रतिवर्गं विश्लेषणं तेषूपलब्धानां तथ्यानां साम्याधारेण सम्पादितम्। अनन्तरं च तेषां सम्भूय संश्लेषणेन शोधनिष्कर्षः अवाप्तः।

**शोधसामग्री**

उपनिषत्सु मनसः सम्बद्धानां बहूनां तथ्यानाम् उपलब्धिः भवति। तेषामुपस्थितिः मनसः विषये नैकविधाः सूचनाः उद्घाटयति। एतत्कारणेन अस्मिन् विषये प्राप्तानां सर्वेषां छन्दासां

सङ्ग्रहः पञ्चसु भिन्नेषु वर्गेषु सम्पादितोऽस्ति। एतेषां वर्गाणां नामोल्लेखः शोधविधौ सम्पादितोऽस्ति। तेषु उपलब्धानां सूत्राणाम् उल्लेखः अधोलिखितः वर्तते–

मनसः उत्पत्तिः- मनसः उत्पत्तिविषये उपनिषत्सु उल्लिखितानां केषाञ्चन तथ्यानां सङ्कलनम् अत्र विहितमस्ति -

**मनसः उत्पत्तिः**

1. तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्।।[1]
2. तस्मै स होवाचाकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च।।[2]
3. एतस्माज्जायते प्राणोमनः सर्वेन्द्रियाणि च।।[3]

**मनसस्वरूपं** – मनसः स्वरूपविषये उपनिषत्सु अनेके उल्लेखाः प्राप्यन्ते। तेषु कतिपयानां उल्लेखः अत्र विहितः–

1. अन्नमयं हि सौम्य मनः।।[4]
2. आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिस्तु सारथिं विद्धि मनः प्रग्रहमेव च।।[5]
3. इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च पराबुद्धिर्बुद्धेरात्मा महान्परः।।[6]
4. इहैवान्तः शरीरे सौम्य! स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति।।[7]

**वासस्थानम्** – मनसः वासस्थानविषये नैकेषु ग्रन्थेषु विवेचनं कृतमस्ति। उपनिषत्सु अस्मिन्विषये प्रस्तुतानां तथ्यानां कथनम् अत्र उपस्थापितमस्ति –

1. अंगुष्ठमात्रपुरुषो मध्य आत्मनि तिष्ठति।।[8]
2. अंगुष्ठमात्रपुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः।।[9]

**कार्यव्यापारः** – मनो हि सामान्यतः संकल्पविकल्पात्मकः उभयेन्द्रियः आख्यायते। परमुपनिषत्सु मनसः कार्यव्यापाराणां विषये अन्येषामपि तथ्यानां उल्लेखः प्राप्यते। तेषु कतिपयानां सूत्राणां संग्रहः अत्र प्रस्तूयते –

1. नियच्छेद्वाङ्मनसी प्राज्ञः।।[10]
2. मनसैवेदमाप्तव्यं नेह नानास्ति किंचन।।[11]

---

1. मुण्डकोपनिषद् ।। 01/08 ।।
2. मुण्डकोपनिषद् ।। 02/02।।
3. मुण्डकोपनिषद् ।।02/03।।
4. छान्दोग्योपनिषद् - 06/05/04।।
5. कठोपनिषद् - 03/03 ।।
6. कठोपनिषद् - 03/10 ।।
7. प्रश्नोपनिषद् - 06/02 ।।
8. कठोपनिषद् 04/12 ।।
9. कठोपनिषद् 06/17।।
10. कठोपनिषद् - 03/13 ।।
11. कठोपनिषद् - 04/11।।

3. तस्मै स होवाच। यथा गार्ग्य! मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजो-मण्डल एकी भवति। ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकी भवति। तेन तर्ह्येष पुरुषो न शृणोति, न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते।।[1]

**महत्त्वोपयोगौ**- भारतीयशास्त्रेषु मनसः महत्त्वोपयोगविषये असंख्यानि उद्धरणानि प्राप्यन्ते। उपनिषत्स्वपि एतस्मिन्विषये विवरणानि प्राप्यन्ते। तेषु प्रमुखानां सूत्राणाम् उद्धरणम् अधोलिखितमस्ति -

1. यन्मनसा न मनुते येनाहुर्मनो मतम्।।[2]
2. आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।।[3]
3. यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा। तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः।।[4]
4. विज्ञानं सारथिर्यस्तु मनः प्रग्रहवान्नरः। सोऽध्वनः परमाप्नोति तद्विष्णोः परमं पदम्।।[5]
5. यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्।।[6]

## विश्लेषणम्

- उपनिषत्सु मनोविज्ञानसम्बद्धानां सूत्राणां संग्रहप्रसंगे अत्र विविध-ग्रन्थेभ्यः सप्तदशसंख्याकानाम् उद्धरणानाम् अवाप्तिः जातास्ति। एकत्र सूत्रेषु मनसः उत्पत्तिविषये त्रयाणां, मनस्स्वरूप-सन्दर्भे चतुर्णां, मनसः वासस्थानसम्बद्धयोः द्वयोः, कार्यव्यापारविषय-काणां त्रयाणां महत्त्वोपयोगविषयकाणां च पञ्चानां सन्दर्भाणामेवोपलब्धिः सम्पादिता। एतेषां विश्लेषणमपि प्रतिवर्गमत्र विधीयते।
- उपनिषत्सु मनसः उत्पत्तिविषये नैकमतानामेवोपस्थितिः प्रतीयते। प्रथमतः कथ्यते यत्प्रलयानन्तरं ब्रह्मणा स्वीयतपोबलेन ईक्षणपुरस्सरं च अन्नप्राणमनः सत्यलोकादीनां सृष्टिः सम्पादिता। अन्यमतानुसारेण परमात्मनः प्रेरणामात्रेण प्राणमनः-इन्द्रियाणाम् उत्पत्तिर्भवति। अन्यमतानुसारेण पृथिव्यप्तेजोवाय्वाकाशानां पञ्चमहाभूतानां, युगपदेव मनसोऽपि सृष्टिः परमात्मना सम्पादिता। एतेषु अन्तिममतस्य समर्थनं अन्येष्वप्युत्तरवर्तिषु ग्रन्थेष्ववाप्यते।
- उपनिषत्सु मनसः स्वरूपविषये अवाप्तेषु भिन्नोद्धरणेषु मनोऽन्नमयः आत्मनः शरीरस्य प्रग्रहः इन्द्रियार्थग्राहकः षोडशकलास्वन्यतमश्च व्याख्यायितः।

---

1. प्रश्नोपनिषद् - 04/02 ।।
2. साम. तवल्कारोपनिषद् - 01/05 ।।
3. कठोपनिषद् - 03/04 ।।
4. कठो. - 03/06 ।।
5. कठो. - 03/09 ।।
6. कठोपनिषद् - 06/10 ।।

एतैरुल्लेखैः प्रतीयते यन्मनसः स्वरूपविषये उपनिषत्सु प्रसङ्गानुसारेण विविधावधारणाः प्रकल्पिताः। मनस्स्वरूपविषयात्मकः ईदृशो भेदः भिन्नोपनिषत्सु कथ्यभेदेनापि सम्भाव्योऽस्ति। कठोपनिषदि मनसः उल्लेखः बुद्धीन्द्रिययोः मध्यस्थरूपेण ख्यापितः यो हि अन्यग्रन्थेष्वस्योल्लेखस्य समकक्षः प्रतीयते। प्रश्नोपनिषदि मनः परमात्मना मानवेषु स्थापितासु षोडशकलासु परिगणितम्। एतासु कलासु प्राणश्रद्धा पञ्चमहाभूतानि पञ्चेन्द्रियाणि, मनः अन्नं वीर्यं तपश्च सम्वलितानि सन्ति।

- वैशेषिकदर्शने मनसः गणना नवद्रव्येषु क्रियते यत्र द्रव्यलक्षणं क्रियागुणवत्समवायिकारणमिति स्थिरीकृतम्।
- उपनिषद्ग्रन्थेषु मनसः वासस्थानसम्बद्धम् उल्लेखद्वयमेवोपलभ्यते। कठोपनिषदिवर्णितयोः सूत्रयोः मानवशरीरे मनसः निवासः हृदयस्थले उल्लिखितः। अत्र कथितमस्ति यच्छरीरस्य अङ्गुष्ठमात्रे स्थले लिङ्ग-शरीरसमन्वितः जीवात्मा निवसति। यतोहि मनः लिङ्गशरीरस्यैवान्तरङ्गः अनेन मनसोऽपि निवासः हृद्येव मान्यः इति। अन्येऽपि प्रसङ्गे अङ्गुष्ठमात्रपुरुषस्य शरीरमध्ये निवासः प्रकाशितः। एवं उद्धरणद्वये मनसः निवासविषये साम्मत्यं विद्यते येनास्य निवासः शरीरस्य मध्यभागे हृदयस्थले स्वीकार्यः।
- परम्परया मनसः प्रवृत्तिः सङ्कल्प-विकल्पात्मिका निगद्यते। वैयक्तिकस्तरे कस्यचिदपि व्यापारस्य प्रथमालोचनं सङ्कल्पः तस्य च प्रतिचिन्तनं विकल्पत्वेन कथ्यते। नैकेषु ग्रन्थेषु सङ्कल्प-विकल्पयोः स्थाने आसक्ति-विरक्तिशब्दयोः प्रयोगः प्राप्यते। परमुपनिषत्सु मनसः प्रथमो व्यापारः इन्द्रियसंयमः प्रकीर्तितः। 'प्राज्ञः मनसः संयमेन वागादीनां इन्द्रियाणां नियन्त्रणं कुर्यादिति'। मनो हि मनुष्याणाम् अन्तःकरणस्यापूर्व-सामर्थ्ययुतः अवयवः येनार्थबुद्धि-समवेतः मानवः शुभाशुभप्रवृत्तिनिवृत्तिभिः स्वीयात्यन्तिकं लक्ष्यं प्राप्नोति। प्रश्नोपनिषदि निगदितं यन्मनसः अभावे सति ज्ञानकर्मेन्द्रियाणां कोऽपि व्यापारः असम्भवः जायते। एतेन विना 'पुरुषः न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपिति' - इत्याचक्षते।
- मनोहि मानवानां कृते समस्तानामिहलौकिकव्यापाराणां सम्पादनार्थं महत्त्वपूर्णः अवयवो विद्यते। वेदसमन्वितेऽखिलसंस्कृतवाङ्मये धर्मार्थकाममोक्षाणां सिद्धये मनसोऽद्वितीयोपयोगः सर्वथा स्वीकृतः प्रशंसितश्च। उपनिषत्स्वपि स्थान-स्थानेष्वेतस्या-द्वितीयः उपयोगः इङ्गितः। सामवेदीये तवल्कारोपनिषदि सुस्पष्टतया वर्णितेन 'यन्मनसा न मनुते येनाहुर्मनो मतम्' इत्यनेन सूत्रेण परमात्मनः साक्षात्कारायापि मनसः ऊर्ध्वग. मनं अविकल्पत्वेन स्थापितमस्ति। अन्यत्रापि आत्मनः भोक्तृसंज्ञार्थं मनसः समावेशः अनिवार्यः विवेचितः उक्तञ्चापि 'आत्मेन्द्रिय-मनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति। मानवानाम् आत्यन्तिक-कल्याणाय मनसः वशीकरणं स्थिरीकरणं वा अवश्यमेव करणीयम्।

विष्णोः परमपदावाप्तये मनसः योजनं इन्द्रियाणां प्रग्रहरूपेण कार्यनिर्वहणं चावश्यमेव-करणीयम्। मानवजीवनस्य परमगतिरपि इन्द्रियाणां मनसि समायोजनेन बुद्धेश्च स्थैर्यभावेनैव सिद्धा भवति।

**निष्कर्षः**

शोधसामग्रीखण्डे सङ्कलितोद्धरणैः तेषां च विश्लेषणप्रसङ्गैः प्रमाणितं यदुपनिषत्सु मनोविज्ञानस्य विविधपक्षाणाम् उपस्थितिः सुस्पष्टास्ति। एतेषु ग्रन्थेषु मनस्सम्बद्धाः सिद्धान्ताः प्रमुखतः पञ्चविधाः सन्ति येषां चयनमत्र मनसः उत्पत्तिः, मनस्स्वरूपं, वासस्थानं, कार्यव्यापारः, महत्त्वोपयोगः चैतेषु पञ्चवर्गेषु कृतमस्ति। उपनिषत्ग्रन्थेषु मनसः विषये प्रकीर्णैः सिद्धान्तैः स्पष्टीभवति यदेते ग्रन्थाः मानवीयान्तःकरणे एतस्य महत्त्वोपयोगेन सहमताः अपि चैतस्य प्रत्येकं पक्षविषये नैकविधमतानि प्रकाशयन्ति।

उपनिषत्सु मनोविज्ञानसम्बद्धानां सूत्राणां सङ्ग्रहप्रसङ्गे अत्र सप्तदशसंख्याकानाम् उद्धरणानाम् अवाप्तिः जातास्ति। एतेभ्यः शब्दप्रमाणेभ्यः स्थापितं यत् मनसः उत्पत्तिः सृष्टिकर्तुः तपोबलेन सञ्जाता। मनःस्वरूपं हि इन्द्रियाणां बुद्धेश्च मध्ये स्थितम् उभयेन्द्रियत्वेन आख्यातम्। अस्यावासः शरीरमध्ये हृदयस्थले उल्लिखितः। मनसः कार्यं सङ्कल्प-विकल्पयोः अथवा आसक्ति-विरक्तिभावानां प्रकाशनेन मानवानां पथप्रदर्शनं प्रकीर्तितम्। अन्यत्र इन्द्रिय-निग्रहः एकाग्रभावस्य स्थापनं चापि मनसः व्यापारत्वेन उपस्थापितम्। मानवजीवनस्य इहलौकिक-पारलौकिकानाम् उद्देश्यानामवाप्तये मनसः शिवसङ्कल्पत्वम्, वशीकरणं, स्थिरीकरणं च परमोपायत्वेन निगदितानि इति।

**सन्दर्भग्रन्थसूचीः-**

- गोयन्दका हरिकृष्णदासम्, ईशादि नौ उपनिषद्, गीता प्रेस, गोरखपुरम्, 2016
- तत्त्वभूषण एस., द उपनिषद्स, कॉस्मो पब्लिकेशन्स, नई दिल्ली, 2003
- निखिलानन्दस्वामी, द उपनिषद्स, अद्वैत-आश्रम, चम्पावत, उत्तराखण्डः, 2012
- सरस्वतीदयानन्दः, ऋग्वेदादि भाष्यभूमिका, आर्षसाहित्यप्रचारट्रस्ट, दिल्ली, 1988
- शर्मा लीलाधरः 'पर्वतीय', भारतीयसंस्कृतिकोशः, राजपाल-एण्ड-सन्स, नई दिल्ली, 1996
- शर्मा पण्डितरघुनन्दनः, वैदिकसम्पत्तिः (प्रथम संस्करणम्), सेठ शूरजी वल्लभदासः ट्रस्ट, मुम्बई, 1956
- शास्त्री-राजवीरः (सम्पादकः), दयानन्द-सन्देशपत्रिका, वैदिकमनोविज्ञान-विशेषांकः, आर्षसाहित्यप्रचार-ट्रस्ट, दिल्ली

UGC - CARE Listed
अप्रैल-जून, 2021

शोधप्रभा
वर्ष : 46, द्वितीयोऽङ्कः

# भारतीयपरम्परायां मानवाधिकारशिक्षा

डॉ. परमेशकुमारशर्मा*

भारतीया परम्परा सुविशाला वर्तते अत्र स्वारस्यम् एव न केवलं समेषां हिताय प्रयतते, अपितु सामान्यमानवप्रवृत्तिः अपि परोपकारपरायणा अनुभूयते, न केवलम् एतावद् अत्र जनाः सामान्यजनस्य कष्टमपि स्वीयं चिन्तयन्ति। तेषां सहजतया समादरभावः मनसि सर्वान् प्रति उत्पद्यते। अतः स्वीयजनस्य कष्टनिवारणस्य विषये तु चिन्त्यते एव सहैव स्वशत्रोः प्रसन्नतायाः अवधानं विधीयते एवम्भूताः भावाः केवलं भारतीयायां परम्परायां विद्यन्ते न अपरत्र कुत्रापि। भारतीयग्रन्थेषु महत्त्वपूर्णं स्थानं भजते धर्मशास्त्रम्। अत्रत्यं धर्मशास्त्रं सततं मानवाधिकारसंरक्षणाय शिक्षायाः च प्रवर्धनाय कामयते इति सार्वत्रिकः भावः। अत्र क्रमप्राप्ते अवसरे **धर्मशास्त्रे मानवाधिकारशिक्षायाः पुटानि अवसराः च अवलोक्यन्ते।**

## क.- धर्मशास्त्रे मानवाधिकारशिक्षायाः पुटानि अवसराः च-

अस्माकं भारतीयपरम्परायाः धर्मशास्त्रं सततं मानवाधिकारसंरक्षणाय सुतरां स्वीयं योगदानं विदधाति। सर्वोऽपि विषयः तत्र मानवसंरक्षणदृष्ट्या एव प्रथितोऽस्ति। तत्र बाहुल्येन सर्वासां छात्राणां विकासाय सततं मानवाधिकारे बोधनं दरीदृश्यते तच्चावसरे प्राप्ते अत्र यथायोग्यं क्रमशः लब्धसामार्थ्यानुसारं जिज्ञासूनां पुरस्तात् उपस्थापयितुम् आनन्दोऽनुभूयते इति। तत्र हि जीवनसुरक्षायाः अधिकारः अष्टमधारायां वर्णितोऽस्ति। तत्र मनुना प्रतिपादितम् -

**शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते।**
**द्विजातीनां च वर्णानां विप्लवे कालकारिते॥[1]**
**आत्मनश्च परित्राणे दक्षिणानां च सङ्गरे।**
**स्त्रीविप्राभ्युपपत्तौ च घ्नन्धर्मेण न दुष्यति॥[2]**

---

* सहायकाचार्यः शिक्षाशास्त्रविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः, नई दिल्ली

1. मनु. 8/348
2. मनु. 8/349

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्।।[1]

अर्थात् आत्मरक्षायै युद्धे स्त्रीणां बालकानां च रक्षायै द्विजातिभिरपि शास्त्रं ग्रहीतव्यम्। यतः धर्मपूर्वकम् अपराधिनां हननेन मनुष्यः पापभाक् न भवति। गुरुः बालकः वृद्धः वेदपाठी ब्राह्मणः आततायिरूपेण हन्तुम् आयाति तर्हि विचारं विना तेषां हननं कार्यम्।

गौतमधर्मसूत्रे लिखितं च -

प्राणसंशये ब्राह्मणोऽपि शमाददीत्।
राजन्यो वैश्यकर्म।।[2]

अनेन स्पष्टमेव धर्मशास्त्रमपि मानवरक्षासन्दर्भे स्पष्टतया प्रतिपादयति। एवञ्च नवमधारायाम् आरोपाणाम् अभियोगानां परीक्षणाधिकारः वर्णितः वर्तते। तत्र हि चतुर्थे अपादयुक्तव्यवहारस्य व्यवस्था कृता वर्तते। व्यवहारस्य परिभाषाः यथा हि-

स्मृत्याचारव्यपेतेन मार्गेणाऽऽधर्षितः परैः।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्।।[3]

तत्र विशिष्य व्यवहारस्य चत्वारः पादाः सन्ति- 1. भाषापादः, 2. उत्तरपादः, 3. क्रियापादः, 4. साध्यसिद्धिः इति। (या.व्यव.अ.सा.व्यव.)

प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिनः।
समामासतदर्धाहर्नामजात्यादिचिह्नितम्।।[4]
श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ।
ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम्।।[5]
तत्सिद्धौ सिद्धिमप्नोति विपरीतमतोऽन्यथा।
चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः।।[6]

एतेषु स्थलेषु विचारपूर्वकेन खण्डनव्यवस्था चिन्तनीया इति प्रपञ्चितम् अस्ति।

षोडशधारायाम् एकाकिनः मेलनेन वा सम्पत्तेः स्वामित्वाधिकारोऽस्ति। कश्चनापि स्वेच्छया वञ्चयितुं न शक्यते लिखितं यत् याज्ञवल्क्यस्मृतौ-

सम्भूयसमुत्थानम् -

1. मनु. 8/350
2. प्रथमप्रश्न 7 अ, 25,26 श्लोकः
3. याज्ञ.व्यवहार.2.5, साधारणव्यवहारमातृकाप्रकराम्-श्लो. 5
4. या.स्मृतिः 2.6
5. या.स्मृतिः 2.7
6. या.स्मृतिः 2.8

**समवायेन वणिजां लाभार्थं कर्म कुर्वता।**
**लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ।।**[1]

गौतमधर्मसूत्रे तृतीयप्रश्ने दशमेऽध्याये लिखितं सम्पत्तेः अधिकारात् कोऽपि मनसा वञ्चयितुं न शक्नोति तथा हि-

**1. ऊर्ध्वं पितुः पुत्रा रिक्थं भजेरन्।**

**2. ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।**
**भजेरन् पैतृकं रिक्थम्, अनीशास्ते हि जीवितोः।।**[2]

अत्र विचारेण ज्ञायते सम्पत्तिस्वामित्वाधिकारविषये सुस्पष्टं शास्त्रेषु वर्णितमस्ति। एवमेव द्वाविंशतितमधारायाः स्वतन्त्रतया जीवनवृत्ति-चयनस्यानुकूलपरिस्थितौ असमीचीनतायाः संरक्षणाधिकारः वर्णितः। तत्र याज्ञवल्क्यस्मृतौ प्रायश्चित्ताध्याये आपद्धर्मे 35 तमे श्लोके, 41 तमे श्लोके, 43, 44 तमयोः श्लोकयोः स्पष्टं प्रतिपादितम्-

यथा हि - **क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः।**
**निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि।।**

अर्थात् आपत्तिकाले ब्राह्मणः क्षत्रियवैश्ययोः कार्येण स्वीयजीविकां निर्भालयेत्। यदा आपात्कालः समाप्येत तदा सः ब्राह्मणवृत्तिं गृह्णीयात्।

अन्यच्च -

**आपद्ग तः संप्रगृह्णन् भुञ्जानो वा यतस्ततः।**
**न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः।।**

अर्थात् आपत्तिकाले यदि ब्राह्मणः निषिद्धं नीचं दानं ददाति अथवा इतस्ततः भोजनं करोति तर्हि तस्य दोषः नास्ति, तस्मिन् कालेऽपि सः अग्निसूर्यौ इव वर्तते।

अन्यच्च - **यदा कृष्यादीनामपि जीवनहेतूनाम सम्भवस्तदा।**

कथं जीवनमित्यत आह-

**बुभुक्षितस्त्र्यं स्थित्वा धान्यब्राह्मणाद्धरेत्।**
**प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः।।**

दिनत्रयबुभुक्षितं ब्राह्मणं त्यक्त्वा अन्यगृहात् अन्नं चोरयन् गृहीतः तर्हि धर्मेण सत्यं वदेत् द्विजादयः केचन आपद्ग्रस्त-पूर्वोक्तजीवनोपायानाम् अभावे तथा च जलाद्यभावे शूद्रस्य गृहात्, यदि तत्र न प्राप्नुयुः तदा वैश्यस्य गृहात्, यदि ततोऽपि किमपि न लभेरन् तदा क्षत्रियस्य गृहात्, एकदिनस्य आधारेण परिमितान्नं चोरयेयुः। यदि तस्मात् स्वामी

1. व्य.अ.समुत्था. 259
2. मनुस्मृतौ 9/104

पृच्छेत् यत् त्वया एतत् अन्नं किमर्थं चोरितम्, तर्हि धर्मतः स्वावस्थया सम्यग्रूपेण वदेत् यत् धान्याभावकारणेन विपत्तिग्रस्तकारणेन कष्टेन एतत् कार्यं विहितम्।

एवञ्च विपत्तिकाले मनुष्यस्य शीलं विद्यां वेदं तपः कुटुम्बं च परीक्ष्य राजा धर्मानुसारं तदनुकूलां वृत्तिं प्रदद्यात् तथाहि-

**तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तपः।**
**ज्ञात्वा राजा कुटुम्बं च धर्म्यां वृत्तिं प्रकल्पयेत्॥**

एवं च गौतमधर्मसूत्रे प्रथमप्रश्ने सप्तमेऽध्याये 22-23 तमयोः श्लोकयोः वर्तते यत् **'आपत्काले कथञ्चिदपि जीविकानिर्वाहासम्भवे, सर्वथाः वृत्तिरशक्तावशौद्रेण'**

अर्थात् जीविकानिर्वाहसम्भवाभावे द्विजः शूद्रकर्मभ्यः अतिरिक्तं केनापि कार्येण जीवनं यापयेत्। अन्यच्च - **'तदप्येके प्राणसंशये' अर्थात्** केचन आचार्याः आपत्स्थितौ शूद्रवृत्तिमपि अङ्गीकुर्वन्ति।

स्त्रीसुरक्षाविषयेऽपि बहुधा अस्माकं ग्रन्थेषु प्रथितमस्ति। तत्र हि-

**पिता रक्षति कौमारे, भर्ता रक्षति यौवने।**
**रक्षन्ति स्थविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति॥**[1]

अर्थात् स्त्रियः सततं समादरणीयाः संरक्षणीयाश्च तथाहि-

**सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः।**
**द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः।**

वास्तविकरूपेण कुटुम्बद्वयं स्त्रीणाम् उपरि आधारितं भवति अतः परमं कर्तव्यमस्ति तासां संरक्षणस्य समाजे। अस्मिन् सन्दर्भे दायदानस्य विषये लिखितं वर्तते। मनुस्मृतेः तृतीयाध्याये एकपञ्चाशत्तमश्लोके एवञ्च द्विपञ्चाशत्तमे श्लोके लिखितम्-

**न कन्यायाः पिता विद्वान्गृह्णीयाच्छुल्कमणवपि।**
**गृह्णश्छुल्कं हि लोभेन स्यान्नरोऽपत्यविक्रयी॥**[2]

अर्थात् पिता किमपि धनादिकं न स्वीकुर्यात्।

**स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः।**
**नारी यानानि वस्त्रं वा ते पापा यान्त्यधोगतिम्॥**[3]

ये विवाहकाले बलात् धनं स्वीकुर्वन्ति लोभेन, ते अवश्यं पापभाजः भवन्ति। सर्वैरपि स्त्रीणां सम्माननं कर्तव्यं स्यात्-

---

1. मनु.9 अ. श्लो. 3,5
2. मनु.3/51
3. मनु.3/52

**पितृभिर्भ्रातृभिश्चैताः पतिभिः देवरैस्तथा।**
**पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः।।**[1]

ये कल्याणं स्वीयजीवने ईहन्ते तैः सर्वैरपि महिलानां संरक्षणविषयेऽवधानं विधेयम्। लिखितं च-

**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।**
**यत्रैतास्तु न पूज्यन्ते सर्वास्तदाफलाः क्रियाः।।**
**तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः।**
**भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च।।**[2]

याज्ञवल्क्यस्मृतौ स्त्रीसम्पत्तिरूपेण प्रथिता वर्तते-

**पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम्।**
**आधिवेदनिकद्यं च स्त्रीधनं परिकीर्तितम्।।**[3]

पतिपत्न्योः परस्परं समानः अधिकारः वर्तते आपस्तम्बधर्मसूत्रे लिखितम् अस्ति-

कुटुम्बिनौ धनस्येशाते। अर्थात् परस्परं समानः अधिकारः द्वयोरपि इति।

एतेन कारणेन अर्थगमनपूर्वकम् अवश्यं धर्मशास्त्रदिग्रन्थानाम् अधिगमः कार्यः। तेषु ग्रन्थेषु बहुविधप्रेरणात्मकमानवाधिकारसंरक्षणात्मकविषयाः वर्णिताः सन्ति। छात्राणां जिज्ञासूनां दृष्टिवर्धनदृष्ट्या अत्र सामान्यतया केचन विषयाः समाराधिताः। अत्र हि प्रत्येकं मानवाधिकारतत्त्वं गूढचिन्तनेन ग्रन्थेषु अवलोकितुं शक्यते। केवलं संस्काराणां विधिवत् पालनेन जीवनस्य पारमार्थिकताप्रदानेन च सर्वथा साफल्यं भविष्यति। एवं रूपेण अन्यानि अपि पुटानि अस्मिन् सन्दर्भे प्रथितानि वर्तन्ते। अन्यविस्तरेणाध्ययनाय जिज्ञासुभिः धर्मशास्त्रं पठनीयम्।

### ख- भारतीयदर्शनेषु मानवाधिकारः

भारतीयसंविधानस्य 25-28 अनुच्छेदे धार्मिकस्वतन्त्रतायाः अधिकारः परिभाषितो विद्यते। तत्र धर्मस्वीकरणस्य मननस्य च स्वतन्त्रता वर्तते। एतस्मिन् विषये वैशेषिकदर्शने प्रारम्भे एव उच्यते कणादेन **''अथातो धर्मं व्याख्यास्यामः''** **भारतीयदर्शनिकाः** चिन्तनं कृतवन्तः यत् लोके ये केऽपि जनाः वा जीवाः सन्ति, ते सर्वे तापत्रयपराहताः सन्ति। तेषां दुःखस्य निवृत्तिः केन प्रकारेण भवेत् एतस्मिन् विषये चिन्तनं कृत्वा शास्त्रस्य निर्माणं कृतवन्तः। दुःखानां निवृत्तिः एव सर्वेषां मानवानाम् अधिकारो विद्यते। तदेव शास्त्राणां प्रयोजनं

1. मनु.अ.3 ,श्लो.55
2. तत्रैव 3/55-56
3. या.स्मृति:2.143

विद्यते। अत एव वैशेषिक- सूत्रेषूपस्कारकर्ता श्रीशंकरमिश्रः उक्तवान् तापत्रयपराहता विवेकिनस्तापत्रयनिवृत्ति-निदानमनुसंदधाना नानाश्रुतिस्मृतीतिहास-पुराणेष्वात्मतत्त्व-साक्षात्कारमेव तदुरपायमाकलयाम्बभूवुः। तत्प्राप्तिहेतुमपि पन्थानं जिज्ञासमानाः परमकारुणिकं कणादं मुनिमुपसेदुरथ कणादो मुनिस्तत्त्वज्ञानवैराग्यैश्वर्यसंपन्नः षण्णां पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानमेवात्मत्व-साक्षात्कारप्राप्तये परमः पन्थाः इति मनसि कृत्वा तत्त्वनिवृत्तिलक्षणाद्धर्मादेतेषामनायासेन सेत्स्यतीति लक्षणतः स्वरूपतश्च धर्ममेव प्रथममुपदिश्यानन्तरं षडपि पदार्थानुद्देशलक्षणपरीक्षाभीरूपदेक्ष्यामीति हृदि निधाय तेषामवधानाय प्रतिजानीते (वैशेषिकदर्शनम्, पृष्ठ सं0 -1) अत एव श्रुतिः वदति **''आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च, एतावदरे खलु अमृतत्वम्'' ''यदात्मानं विजानीयात् अहमस्मि इति पूरुषः। किमिच्छन् कस्य कामाय संसारमनुसंसरेत्''**। स्मृतिः अपि वदति-

**आगमेनानुमानेन ध्यानाभ्यासरतेन च ।**
**त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्॥**

एवं रूपेण दुःखनिवृत्तये दार्शनिकाः मननम् अकुर्वन्। वैशेषिकसूत्रकारः धर्मस्य स्वरूपं निरूपयन् आह **''यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'' अर्थात्** यस्मात् तत्त्वज्ञानं जायते, अथ च दुःखस्य आत्यन्तिकनिवृत्तिः भवति स धर्मः।

❖ उपस्कारकारः भणति- यत् तत्त्वज्ञानम्, अथ च दुःखस्य सर्वदा सार्वकालिकं नाशं यः करोति स धर्मः।

❖ केचन वदन्ति- अभ्युदयद्वारकस्य मोक्षस्य प्राप्तिं यः कारयति स धर्मः।

❖ वृत्तिटीकाकारैः उच्यते- यत् सुखम् अथ च एककालिकानाम् आत्मनः विशेषगुणानां नाशं यः कारयति स धर्मः।

❖ अत्र केचन वदन्ति- लोके उन्नतिम् अथ च निःश्रेयससिद्धिं यः कारयति स एव धर्मः। अन्येषु स्वर्गस्य प्राप्तिं मोक्षस्य सिद्धिं वा उत्पत्तिं यः कारयति स धर्मः। सर्वासु व्युत्पत्तिषु धर्मः जीवानां सुखप्राप्तये कारणं विद्यते। तेन प्रतीयते यत् सुखस्य प्राप्तिः सर्वेषां मानवानाम् अधिकारः वर्तते। तस्य सुखस्य कारणं वैशेषिकदर्शनानुसारं धर्मः एव विद्यते।

ये जनाः परोपकारं कुर्वन्ति सन्मार्गस्य अवलम्बनं च कुर्वन्ति ते सज्जनाः वा अदुष्टाः सन्ति। तेषां कृते यदि भोजनं वा दानमस्माभिः कार्यते दीयते वा तदा अस्माकम् उन्नतिः भवति। परन्तु ये दुष्टाः वा असज्जनाः सन्ति तेषां कृते यदि भोजनं कार्यते वा दानं दीयते तदा अस्माकमुन्नतिः वा धर्मस्य प्राप्तिः न भवति। अत एव उच्यते तद्दुष्टभोजने न विद्यते। के दुष्टाः वा असज्जनाः सन्ति इति जिज्ञासायाम् उच्यते दुष्टं हिंसायां ये निन्दितकर्माणि वा शास्त्रविरुद्धानि वा संविधानविरुद्धानि कार्याणि कुर्वन्ति ते दुष्टाः सन्ति। तैः सह

गमनेन, तैः सह भोजनेन वा तेषां संसर्गेण अपुण्यं जायते वा अस्माकं कल्याणं न भवति। मानवाधिकारविषये अथ च अस्मदपेक्षया ये श्रेष्ठाः सन्ति तत्र यदि उभयोः मध्ये कस्य परित्यागः करणीय इत्यत्र सूत्रकारः वदति। ये विपरीताचरणं कुर्वन्ति तेषां वधेऽपि दोषः नास्ति। यदि स्वसमानः कश्चन अन्यः अस्ति तदा स्वस्य वा अपरस्य त्यागः समो विद्यते। परन्तु अस्मदपेक्षया कश्चन श्रेष्ठः जनः विद्यते अथ च स्वस्य परस्य च उभयोः मध्ये एकस्य त्यागः अपेक्षितः तदा स्वस्यैव त्यागः समीचीनः विद्यते वैशेषिकशास्त्रदृष्ट्या। अत्र प्रमाणानि सूत्रणि सन्ति।

❖ तथा विरुद्धानां त्यागः[1]

❖ हीने परे त्यागः[2]

❖ समे आत्मत्यागः परत्यागो वा[3]

❖ विशिष्टे आत्मत्याग इति[4]

एवं वैशेषिकदर्शने अनेकेषु स्थलेषु मानवाधिकारमाश्रित्य वर्णनं विद्यते तत्र धर्मं स्वीकृत्य सर्वाणि कार्याणि मानवानुकूलानि करणीयानि सन्ति।

जैनदर्शने मानवाधिकारस्य वर्णनम् अनेकेषु स्थलेषु दरीदृश्यते। जैनदर्शनस्य चतुर्विंशतिः तीर्थंकराः अभवन्। संसारसागरात् निवृत्त्यर्थं तीर्थङ्कराः प्रादुर्बभूवुः। गर्भावतरणं, जन्म, दीक्षा, केवलज्ञानोत्पत्तिः निर्वाणं च परमकल्याणशब्देन उच्यते। तत्र महान् उत्सवः भवति। एते सर्वे तीर्थङ्कराः मानवाधिकारस्य स्वरूपं स्वोपदेशे निरूपितवन्तः। महात्माबुद्धः चतुर्णामार्यसत्यानामुपदेशं चकार। तत्र मानवाधिकारस्य प्रमुखतत्त्वानि सन्ति। दुःखं, दुःखसमुदयः, हानं, हानोपायः च। चार्वाकदर्शनेषु मानवाधिकारो वर्तते। ते वदन्ति यत्–

**यावत् जीवेत् सुखं जीवेत् नास्ति मृत्युरगोचरः ।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः।।**

अर्थात् मनुष्याणां कृते सुखस्य अधिकारो विद्यते। सुखमेव पुरुषार्थः, लोकसिद्धः राजा एव ईश्वरः। परलोकः नास्ति, अत एव येन केनापि प्रकारेण सुखस्य प्राप्तिः यदि स्यात् तर्हि तदेव आचरणीयम्। महर्षिः गौतमः सर्वेषां जीवानां मूलाधिकारः वर्तते यत् सर्वे जीवाः मोक्षं प्राप्नुयुः। तदर्थं षोडशपदार्थानां तत्त्वज्ञानं कारणं भवति। अथ च मनुष्याणां कृते कः अधिकारः वर्तते तदर्थं न्यायसूत्रेषु विस्तृतरूपेण प्रतिपादितम्। अनुमानवाक्येषु सम्यग्रूपेण प्रयोगं कुर्वन्तु। अर्थात् सद्धेतूनां प्रयोगं कुर्वन्तु, हेत्वाभासानां प्रयोगं मा कुर्वन्तु

---

1. अ–6, आ–1, सू–13
2. अ–6, आ–1, सू–14
3. अ–6, आ–1, सू–15
4. अ–6, आ–1, सू–16

इति। शास्त्रविहितकर्मसु मानवानामधिकारः अस्ति, शास्त्रनिषिद्धकर्मसु मानवानां न अधिकारः इत्यपि प्रतिपादितं विद्यते। सांख्ययोगतत्त्वानां विवेकज्ञाने मानवानाम् अधिकारः प्रतिपादितः विद्यते। वेदान्तदर्शने सर्वेषां मानवानाम् अधिकारः ब्रह्मजिज्ञासायां, ब्रह्मज्ञाने च अस्ति। तेन ब्रह्मज्ञानानन्तरम् अनन्तकालपर्यन्तं सुखस्य प्राप्तिः भवति। वस्तुतः सर्वेषां दर्शनानां मुख्यं प्रयोजनं सर्वे जीवाः सुखानुभूतिं कुर्वन्तु इति।

षट्सु दर्शनेषु, द्वादशसु आस्तिक-नास्तिकदर्शनेषु तात्त्विकविवेचनेन अभिज्ञायते यत् मानवाधिकारसंरक्षणमेव परमं लक्ष्यमिति। अतः प्राचीनकालेऽपि मानवाधिकारशिक्षायाः पुटानि दार्शनिकग्रन्थेषु आसन् इति।

**ग- भारतीयग्रन्थेषु मानवाधिकारशिक्षा**

भारतीयग्रन्थपरम्परा **'धर्मात् समारभते' तत्र** हि स धर्मोऽत्र धर्मनिरपेक्षतामेव धारयति यतः ध्रियते इति धर्मः, धरन्ति इति धर्मः वा। अतः उक्तमेवास्ति **'धर्मो रक्षति रक्षितः' भारतीयवाङ्मये** पुरुषार्थचतुष्टये धर्म एव प्रथमपुरुषार्थोऽस्ति, धर्माधारे एव अन्ये सर्वेऽपि पुरुषार्थाः विराजन्ते इति। मनुना धर्मस्य दशप्रकाराः वर्णिताः सन्ति-

**धृतिः क्षमा दमोऽस्तेयः शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधः दशकं धर्मलक्षणम्॥**[1]

धर्ममार्गेणैव मानवः समाजे सर्वप्राधान्यं भजतेऽतः कथितमस्ति **'धर्मेण हीनः पशुभिः समानः'**। अन्येषु प्राणिषु केवलं धर्मः एव नास्ति। धर्म एव मानवं समाजे रक्षयितुं शक्नोति। धर्ममार्गे ये प्रवर्तमानाः भवन्ति तेषां धर्मः सततं संरक्षणं कुरुते। यदि अस्मिन् जगति सुखेन जीवितुमीहा वर्तते तर्हि तत्र प्रामुख्येण धर्मः एव सर्वं संसाधयति। यतः -

**धर्मादर्थः प्रभवति धर्मात्प्रभवेत् सुखम्।**
**धर्मेण लभते सर्वं धर्मसारमिदं जगत्॥**

धर्मं विना मानवस्य जीवनं दुःरसं दुरूहं च भवति। ''धर्मेण हन्यते व्याधिर्येनायुः शाश्वतं भवेत्'', धर्ममार्गेण सर्वरोगाणाम् उपशमनं भवति।

क्वचित् शास्त्रेषु धर्मस्य विषये प्रकटरूपेण कथितं यत् धनस्य अनागमोऽपि धर्ममार्गे गन्तुं प्रेरयति। तथाहि-

**इदमेव हि पाण्डित्यमियमेव विदग्धता।**
**अयमेव परोधर्मः न आयादधिको व्ययः॥**

1. मनु. 6.192

मानवाधिकारशिक्षारूपेण धर्मः परमतत्त्वरूपेण सर्वेषां हितकामना विनूतनं तत्त्वं द्योतयति लिखितं च -

**धर्मः केवलमेव निश्चलपदं प्राप्नोति मृत्युञ्जयः।**
**तस्मात् सततमेकनिष्ठमनसा सेवस्व धर्मामृतम्॥**

आर्थिकाधिकारविषये वेदादिग्रन्थेषु लिखितम् अस्ति मतिः परिश्रमश्च रक्षितौ तर्हि मानवः सर्वं सहजतया अर्जयितुं शक्नोति लिखितं च -

**अयं मे हस्तो भगवान् अयं मे भगवत्तरः।**
**कृतं मे दक्षिणे हस्ते जयो मे सव्य आहितः॥**

अत्र कारणेन अर्थः अवश्यं लब्धो भविष्यति। अतः जीवने चिन्त्यं यत् कर्तव्यं वर्तमानं च अस्माकीने, फलं भविष्यं च परमात्मनः अधीने इति। सन्मार्गेण गमनेन कालान्तरे तत्प्राप्यते एव यत् मानवेन प्राप्तव्यमस्ति। अर्थाधिकारविषये त्यागवृत्तिं द्योतयन् कश्चन श्लोकः भागवते वर्णितः वर्तते-

**चीराणि किं पथि न सन्ति दिशन्ति भिक्षां**
**नैवाङ्घ्रिपाः परभृतः सरितोऽप्यशुष्यन्।**
**रुद्धाः गुहाः किमजितोऽवति नोपसन्तान्**
**कस्माद्-भजन्ति कवयो धनदुर्मदान्धान्॥**[1]

अर्थात् धनं न महत्त्वपूर्णं तत्र त्यागः महत्त्वपूर्ण इति आर्थिकाधिकारशिक्षायाः प्रसङ्गे भागवते वर्णितमस्ति। अर्थस्य कामना वर्तते तर्हि सततपरिश्रमः एव फलमस्ति तदर्थं सततं प्रयत्नपूर्वकं जीवनस्य माङ्गलिककामनया परिश्रमः कार्यं तेनैव धनप्राप्तिः तदभावे आर्थिकाधिकारस्य हननमेव। लिखितं च-

**'न अलसाः प्राप्नुवन्त्यर्थान्' अर्थात्** कर्मणि रताः एव सर्वं प्राप्नुवन्ति। अतः अन्यस्य अधिकारहननापेक्षया निरन्तरं श्रमः कार्यः। तेन आर्थिकाधिकारस्य संरक्षणं भवितुमर्हति इति। धनं सततं कार्यं न कुरुते वास्तविकं चेत् धनव्ययः सुतरां सामर्थ्यं संधारयति।

तत्रैव मानवाधिकारशिक्षायां कामस्यापि महत्त्वावहा भूमिका वर्तते लिखितं च- **'अकामस्य क्रिया काचित् दृश्यते नैव श्रूयते।'**

अर्थात् कामं विना न किमपि क्रियते केनापि। अतः **'कामः धर्मार्थयोः वरः'** महर्षिवात्स्यायनः कामसूत्रे शरीराय अन्याहारान् इव कामं मनुते, आत्मसंयुक्तेन मनसा इन्द्रियाणां स्वस्वविषयेषु अनुकूलप्रकृतिः एव कामः वर्तते। अथापि कामे शरीर-मनः-आत्मनाम् आनन्दः गुप्तः अस्ति।

---

1. भा 2.2.5

मानवाधिकारशिक्षाप्रसङ्गे मोक्षः अवश्यं विचारणीयः एव। अस्माकम् आचारविचाराः एव अस्माकं वास्तविकता वर्तते। यथा चिन्तनम् अस्माकं तथैव विचाराः। लिखितं च-

**यदा नाहं तदा मोक्षः यदाहं बन्धनं तदा।**

अज्ञाननिवृत्तेः विना मोक्षस्य कथा एव वृथा अस्ति। तत्त्वज्ञानं मोक्षयति मानवम्। भवबन्धमोक्षौ। एतत् बन्धनं मोक्षश्च ज्ञानस्य एव नामद्वयं वर्तते। मोक्षः अपि मानवेन साधनीयः पुरुषार्थेऽस्ति।

सांस्कृतिकाधिकारोऽपि साम्प्रतिकः अस्मद्ग्रन्थेषु सुतरां योग्यरीत्या सर्वेषां ज्ञानवर्धनदृशि कार्याय प्रयतते। तत्र संस्कृतिसंरक्षणे अधिकारे वा आश्रमव्यवस्था योग्यतया दरीदृश्यते। अस्माकं संस्कृतेः परमं द्योतका वर्तन्ते ब्रह्मचर्यादयः। तस्य वर्णनप्रसङ्गे लिखितं **'ब्रह्मवदाचरणं ब्रह्मचर्यम्' अन्यच्च 'मरणं बिन्दुपातेन, जीवनं बिन्दुधारणात्' ब्रह्मचर्यधारणमात्रेण** मानवः स्वीयं परमं तत्त्वं प्राप्तुं शक्नोति। ब्रह्मचर्यभङ्गतायाः अष्टकारणानि भवितुमर्हन्ति इति ग्रन्थेषु वर्णितमस्ति-

**स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्।**<br>**संकल्पोऽध्यवसायश्च क्रियानिवृत्तिरेव च।**<br>**एतन्मैथुनमष्टाङ्गं ब्रह्मचारी परित्यजेत्।।**

अन्यच्च कथिमस्ति अन्यं तपः तप एव नास्ति यदि जीवने ब्रह्मचर्यपरिपालनं नास्ति -

**न तपस्तप इत्याहुः ब्रह्मचर्यं तपोत्तमम्।**

ब्रह्मचर्यम् एव परमं तपः वर्तते। ब्रह्मचर्यधारणात् मानवः स्वयमेव देवत्वं प्राप्नोति यथा हि-

**ऊर्ध्वरेता भवेद्यस्तु सः देवो न तु मानुषः।**

इति सम्पूर्णब्रह्माण्डस्य सुव्यवस्थितसंचालनं सत्तया भवति सा सत्ता ब्रह्मचर्यरूपा एव। तथा च-

**आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महद्यशः।**<br>**पुण्यं च प्रीतिमत्त्वं च हन्यतेऽब्रह्मचर्यया।।**

ब्रह्मचर्यस्य अपालनेन सर्वं शीघ्रं विनष्टं जायते।

एवं सांस्कृतिकपरिरक्षणाय गृहस्थजीवनमपि महत्त्वभूतं भवति, यत्र **'अतिथिदेवो भव'** इति मन्त्रः आबाल्यात् एव संबोध्यते पाल्यते च।

सर्वेषाम् अपि आश्रमाणाम् आश्रयभूतः अयम् आश्रमः तथा हि-

**यथावृक्षमाश्रित्य जीवन्ति सर्वपक्षिणः।**
**तथा च गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः।।**

इयमेव परम्परा सर्वजीवाः गृहस्थानाम् उपरि स्वीयम् अधिकारं चिन्तयन्ति स्म। तथा हि –

**मातरं पितरं वृद्धं भार्यां चैव पतिव्रताम्।**
**शिशुं च तनयं हित्वा नावधूताश्रमं व्रजेत्।।**

गृहस्थजीवनस्यैव परिपालनं सर्वमहत्त्वपूर्णं वर्तते इति कथितमस्ति अस्माकं ग्रन्थेषु। इयम् अस्मद्देशस्य परम्परा वर्तन्ते। दाम्पत्यजीवनस्य वर्णनकाले भणितम्–

**दाम्पत्यम् अनुकूलं चेत् स्वर्गस्य किं प्रयोजनम्।**
**दाम्पत्यं प्रतिकूलं चेत् नरकं किं गृहमेव तत्।।**

सर्वैरपि सांस्कृतिकपरम्परानुरोधेन स्वीयजीवनपालनं विधीयते। एवञ्च वानप्रस्थाश्रमस्यापि वर्णनं वर्तते। अत्रापि सर्वस्य योग्यतया स्वीयदायित्वपरिपालनं विधातव्यं ततः परमेव कश्चनापि संन्यासाश्रमम् अवलम्बितुं शक्नोति। संन्यासाश्रमे संन्यासचिन्तनं सापेक्ष्यं वर्तते। वस्त्रं वेशभूषा, दण्डः, कमण्डलुः चेत्यादीनि वस्तूनि सापेक्षाणि नहि। नीत्सेवर्यः अस्मिन् सन्दर्भे चिन्तयति–

संन्यासी काञ्चित् सूक्ष्मतमां हिंसा कुरुते, सः स्वीयोन्नत्यै साधारणजनान् दीनान् हीनान् करोति, तान् आत्मग्लानिभावेन उत्पीडयति, हीनतायाः उत्पादनमेव तस्य संन्यासस्य प्रेरणा भवति। वास्तविकरूपेण संन्यासी तु–

**'ज्ञेयः सः नित्यसंन्यासी यो न द्वेष्टि न कांक्षति।'**

अन्यच्च काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः। महावीरः संन्यासजीवनविषये कथयति यत्– यथा भ्रमरः पुष्पेभ्यः रसं गृहीत्वा आत्मनं सन्तोषयति, परं पुष्पाणि न पीडयति, एवमेव संन्यासी गृहस्थैः जागतिकजनैः अन्यसहयोगिभिः च सह एवं व्यवहारं कुर्यात् येन केऽपि लेशमात्रं कष्टं नानुभवेयुः।

आश्रमपरिपालनरूपः सांस्कृतिकः अधिकारः अवश्यं परिपालनीय एव। अत्रत्या व्यवहारपूरकता एव सर्वेषां कृते आदरयोग्या।

अतः सांस्कृतिकाधिकारः भारतीयपरम्परायां सर्वेषां हितदृष्ट्या महत्त्वपूर्णभूमिकां निर्वहति।

भारतीयपरम्परायां वास्तविकरूपेण अवलोक्यते चेद् सर्वेषाम् अधिकाराणामपेक्षया नैतिकाधिकारः एव आद्रियते स्म। नैतिकाधिकारेणैव सर्वं साधयितुं शक्यते। नैतिकता एव लोकस्थितेः कर्तव्याकर्तव्यं परिचालयति। नैतिकताविषये कठोपनिषदि लिखितं वर्तते यत्–

**श्रेयश्च प्रेयश्च मनुष्यमेतः**
**तौ सम्परीत्य विविनक्ति धीरः।**
**श्रेयो हि धीरोऽभिप्रेयसो वृणीते**
**प्रेयो मन्दो योगक्षेमात् वृणीते।।[1]**

विवेकिनः प्रेयसः परित्यागपुरस्सरं प्रेयसः वरणं कुर्वन्ति। अत्र श्रेयः प्रेयश्च परस्परं विरोधितत्त्वमिति। श्रेयसोऽभिप्रायः आध्यात्मिकपरमकल्याणं, प्रेयः इत्यस्य अभिप्रायः सांसारिकसौविध्यमिति। यद्यपि उभयमपि शुभमिति। किन्तु प्रेयसः अपेक्षया श्रेयसि एव विवेकिनः स्वीयं कल्याणं भावयन्ति। श्रेयसः वरणेन मानवः आध्यात्मिकानन्दरूपं शाश्वतानन्दं प्राप्नोति। अर्थात् परमोऽर्थः जायते यत् नैतिकतायाः स्वीकरणमेव शुभं शिवं वास्ति। अतः सर्वाधिकाररूपेण नैतिकता मानवस्य प्रेरणायै महत्त्वभूतं साधनं भवितुमर्हति। महाभारते अपि विविधस्थलेषु मानवाधिकारसंरक्षणस्य द्योतनं विहितमस्ति। तदर्थं कथयति भीष्मः -

**अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते।**
**परस्परं च खादन्ति सर्वथाधिगराजकम्।।[2]**

अर्थः - यस्मिन् राज्ये अराजकता भवति धर्मः (उचितानुचितभेदविवेकः) स्थिरः न भवति। नागरिकाः परस्परं मिलित्वा खादन्ति। एवं राज्यं सर्वप्रकारेण अयोग्यमस्ति।

अग्रे कथयति भीष्मः - पूर्वकाले अराजकप्रजाः परस्परं भक्षयन्ति स्म यथा विशालः मत्स्यः लघुं मत्स्यं भुङ्क्ते।

**अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम्।**
**परस्परं भक्षयन्तो मत्स्याः इव जले कृशान्।।[3]**

अतः अहम् अशृण्वं यत् तेषु केचन जनाः उपस्थिताः सन्तः निर्णयान् व्यकुर्वन्। 'येषां वाणी कठोरास्ति, ये स्वभावेन उद्दण्डाः वर्तन्ते, ये अन्येषां स्त्रीणां शीलहरणं कुर्वन्ति, येऽन्येषां धनं चोरयन्ति, तेषां वयं त्यागं करिष्यामः येन सर्ववर्गीयजनानां विश्वासः जेतुं शक्येत, अनया व्यवस्थाः सम्यक्तया तिष्ठेयुः।

**समेत्य तास्ततश्चक्रुः समयानिति न श्रुतम्।**
**वाक्शूरो दण्डपरुषो यश्च स्यात्पारदायिकः।**
**यश्च नः समयं भिन्द्यात्त्याज्या नस्तादृशा इति।**

1. कठ. 1.2.2
2. शा.प.अ.66
3. शा.प.अ.66

**विश्वासार्थं च सर्वेषां वर्णानामविशेषतः।**
**तास्तथा समयं कृत्वा समयेनावतस्थिरे॥[1]**

मानवैः अधिकाराणां सततं पालनं प्रकर्तव्यमस्ति, तेनैव समाजस्य वास्तविकस्वरूपज्ञानं जायेत। नैतिकतायाः अधिकारपालनस्यैव विषये भारतीयपरम्परायां वैशेषावधानमाचारव्यवहारयोः पालनमेव मुख्यम्। यदि आचारः नैतिकता वा आदरयोग्ये तर्हि न किमपि अपेक्षितं केनापि प्रकारेण इति।

**घ-भारतीय-ऋषिपरम्परायां मानवाधिकारः -**

आरम्भकालादेव मानवाधिकारस्य पोषिका वर्तते भारतीयपरम्परा। अत्रत्याः सर्वेऽपि आचार्याः मानवाधिकारसंरक्षणविषये दत्तावधानाः आसन्, किन्तु वैदेशिकानां विविधाक्रमणैः अस्य देशस्य सुतरां कारणीभूता परम्परा सर्वैरपि मिलित्वा ध्वंसिता। यद्यपि अस्माकीनाः आचार्याः सुतरां प्रेरणात्मकरीत्या मानवाधिकारस्य पक्षं स्वीकृतवन्तः। तत्र हि क्रमेण विचारयामः तर्हि कौटिल्योऽपि अत्यन्तं मेधया शास्त्रप्रावीण्येन महतः राजनीतिग्रन्थस्य रचनां कृतवान्, किन्तु तत्र तस्य प्रमुखं लक्ष्यं केवलं लौकिककल्याणानां समावेशः एव आसीत्। एवमेव मनुवर्येण लिखितः ग्रन्थः मनुस्मृतिः भारतीयजनानामधिकारपालनस्य प्रथमः ग्रन्थः वर्तते। यस्य विचाराः भारतीयसामाजिक-सांस्कृतिकविकासे महद्योगदानं कृतवन्तः।

प्राचीनभारतीयसंस्कृतेः चत्वारः आधारस्तम्भाः आसन् ते च धर्मः, अर्थः, कामः, मोक्षः। एतेषां चतुर्णां स्तम्भानां रक्षणाय अष्ट मानवाधिकाराः साम्प्रतं प्रसिद्धाः प्रथिताः- 1. प्रसन्नतायाः अधिकारः 2. समानतायाः अधिकारः 3. शिक्षायाः अधिकारः 4. सुरक्षायाः अधिकारः 5. न्यायस्याधिकारः 6. सामाजिकसुरक्षायाः अधिकारः 7. मानवीय-व्यवहाराधिकारः 8. धर्मस्याधिकारः।

एतेषां सर्वेषाम् अधिकाराणां रक्षया एव समाजः सर्वेषु क्षेत्रेषु योग्यतां धारयति। तथा च वात्स्यायनः अपि कामसूत्रस्य लेखनेन प्रत्यपादयत् यत् व्यक्तिः सकारात्मकरूपेण जीवनं यापयन् सर्वाणि सुखानि शिष्टतापूर्वकं भुञ्जीयात्। तत्रैव प्राचीनग्रन्थेषु सर्वत्र **'सर्वे भवन्तु सुखिनः' इत्यादयः** विचाराः सर्वेषां योग्यताविश्वासदृष्ट्या वर्णिताः सन्ति। तत्रैव **'वसुधैव कुटुम्बकम्' इत्ययं** विचारः सर्वेषां प्रेरणायै भवितुमर्हति यदि समाजः केवलम् अत्रत्यपरम्परायां प्रतिपादितसिद्धान्तद्वयम् एव पालयेत् तर्हि सर्वं साधयितुं शक्नोति। एवञ्च मानवाधिकारस्य परिपालनमपि जायेत। प्राचीनाधिकारेषु यदि शिक्षाधिकारविषये चर्चयामस्तर्हि-

---

1. शा.प.अ.66

**सुखार्थिनः कुतो विद्या विद्यार्थिनः कुतः सुखम्।**
**सुखार्थी वा त्यजेत् विद्यां विद्यार्थी वा त्यजेद् धनम्।।**

शिक्षाधिकारे व्यक्तिः सुखानां त्यागपूर्वकमेव स्वीयजीवनं सर्वोत्कृष्टं कर्तुं प्रभवति। एवञ्च नीतिग्रन्थेषु प्रतिपादितं दृश्यते-

**विद्या ददाति विनयं विनयाद् याति पात्रताम्।**
**पात्रत्वाद् धनमाप्नोति धनाद् धर्मस्ततः सुखम्।।**

विद्यायाः ग्रहणमात्रेणैव अनेकविधविषयसामर्थ्यं मानवेषु सहजतया आयाति एव। अस्मिन् विचारे एव विवेकानन्दोऽपि ब्रवीति- **'एतादृशं प्रशिक्षणं येन वर्तमानेच्छानां नियमितीकरणं क्रियते यत् प्रभावशाली भवति तदैव शिक्षेति उच्यते'।**

मानवाधिकारप्रसङ्गे चारित्र्यशिक्षणं भारतीयपरम्परायां प्रथमतत्त्वेन समाविशति। अनेनैव सर्वेषामपि जनानां परिवर्तनं कार्यविधानं शैलीपरिवर्तनं जीवनस्य सर्वोत्कृष्टपरिष्कारश्च जायते। चरित्रेण एव मानवस्य सर्वविधविकासस्य द्रढीयान् परिष्कारो भवति।

मानवाधिकाराय भारतीयाः ऋषयः अत्यन्तं बद्धपरिकराः सन्ति। तेषामभिप्रायोऽस्ति मानवानाम् अधिकारस्य संरक्षणेनैव समाजः सुरक्षितः वर्धितश्च भवति। महाभारतादिप्राचीनग्रन्थेष्वपि बहुधा समेषां हितकामनया मानवाधिकारसंरक्षणविषये प्रतिपादितं वर्तते। मनुस्मृतौ लिखितं यत्-

**अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम्।**
**वाक्यैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छता।।**

अर्थात् अहिंसामात्रेण तन्त्रेण सर्वप्रकाराणां मानवाधिकाराणां संरक्षणं भवितुमर्हति। शास्त्रेषु कथितमस्ति परिग्रहः हिंसायाः जनकोऽस्ति, यावान् परिग्रहः तावती हिंसा। अथापि जनाः परिग्रहे लग्नाः सन्ति। तत्र प्रतिपादितमस्ति साम्यवादरूपेण प्रत्येकं प्राणौ परमात्मा भवितुं शक्तिः वर्तते, किन्तु सर्वैः पुरुषार्थेनैव तत्तत्त्वमवाप्तव्यम् इति। अथ च-

**अहिंसा सर्वभूतानाम् एतत्कृत्यतमं मतम्।**
**एतत् पदमनुद्विग्नं वरिष्ठं धर्मलक्षणम्।।**

हिंसायाः अभावे अहिंसा भविता। तस्याः प्रतिष्ठापनेन मानवाधिकारहननसमस्या स्वयमेव परिसमाप्तिमेति। एवञ्च-

**अहिंसा परमो धर्मस्तथाहिंसा परो दमः।**
**अहिंसा परमं दानमहिंसा परमं तपः।।**
**अहिंसा परमो यज्ञस्तथाहिंसा परं फलम्।**
**अहिंसा परमं मित्रम् अहिंसा परमं सुखम्।।**

अतः निष्कर्षरूपेण वक्तुं शक्यते यत् अहिंसया बहुविधसमस्याः समापयितुं शक्यन्ते।

अर्थात्-

**अभावो वा प्रभावो वा सः हिंसामभिवर्धते।**
**तैनेवास्मिन् समाजे तु हेयहिंसा प्रवर्धते।।**

हिंसायाः समापनेनैव मानवाधिकारस्य संरक्षणं सुतरां जायतेऽतः मानवाधिकारस्य सततं परिश्रमेण परिचालनं विधातव्यमिति।

प्राचीनग्रन्थेषु मनुष्यनिर्माणप्रक्रियायाः प्रसङ्गे आधिक्येन दृष्टिः सार्यते स्म तत्रापि मार्कण्डेयपुराणे लिखितम्-

**नरत्वं दुर्लभं लोके विद्या तत्र च दुर्लभा।**
**कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभा।।**

एतच्चतुष्ट्यं जीवने समुत्पन्नं जायते तर्हि अवश्यं जीवनं सर्वोत्कृष्टतां भजतेऽतः मानवस्य आत्मसाधनमेव सर्वोत्कृष्टतत्त्वं कथितम्। यथा हि-

**दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः।**
**तस्मिन् प्राप्ते तु कर्तव्यं सर्वथैवात्मसाधनम्।।**

मानवाधिकारपालनप्रसङ्गे ग्रन्थेषु कथितं यदि जीवने रागराहित्यं वर्तते तर्हि गृहेऽपि तपोवनमस्ति नो चेत् वनेऽपि परिपीडनमेव जायेत। तथाहि-

**वनेऽपि दोषाः प्रभवन्ति रागिणां**
**गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।**
**अकुत्सिते कर्मणि यः प्रवर्तते,**
**निवृत्तरागस्य गृहं तपोवनम्।।**

त्यागपरायणता जीवने वर्तते तर्हि सर्वमपि सहजतया साधनयोग्यमस्ति। भारतीयपरम्परायां मानवः स्वीयस्थिरस्वभावे स्थितो भवति तर्हि न कस्यचिदपि कश्चनापि हिंसनं विधास्यति इति सर्वत्रावलोक्यते। लिखितं च-

**मनुर्भव ततो देवः पश्चात् पुरुषोत्तमः।**
**सदा स्यादूर्ध्वगोजन्तुः इत्यादेशः सनातनः।।**

मानवाधिकारहननक्षेत्रे विचारयामः चेत् अभिज्ञायते यत् यदा मानवः अन्येषां किमपि तत्त्वं स्वीकर्तुमभिलषति तदैव सः मानवाधिकारस्य हननं करिष्यति। किन्तु भारते तु क्रमिकप्रक्रियया ऊर्ध्वगतिविषयकं चिन्तनमस्ति। यच्च चिन्तनं सर्वदा मानवस्य स्वाभाविकजीवनं परिवर्धयितुं वर्तते। अतः ग्रन्थेषु कथितम्-

**नहि मानुषात् श्रेष्ठतरं हि किञ्चित्।।**

अस्मिन् प्रसङ्गे एव शङ्कराचार्यः भणति-

**मनुष्यत्वं मुमुक्षुत्वं महाजनसंश्रयः।।** इति

अत्र मानवता, मोक्षभावः महज्जनसंश्रयः एतत्त्रयस्य उत्पादनमात्रेणैव अधिकारहननस्थितिः समाप्तिं यास्यति।

मानवाधिकारसंरक्षणस्य परमं सूत्रं वर्तते–

**आत्मनः प्रतिकूलानि परेषां न समाचरेत्।।**

अस्मिन् एव प्रसङ्गे युधिष्ठिरयक्षसंवादस्य केचन श्लोकाः कथमिव मानवाधिकारप्रेरकत्वं प्रकारान्तरेण संधौतयन्ति इति अवलोक्यते– यदा प्रश्ननामुत्तराणि युधिष्ठिरः प्रददाति तदा यक्षः कथयति– भवतः एकः अनुजः जीविष्यति। कथय, कः जीवितः स्यात्। तदा युधिष्ठिरः ब्रवीति–

**धर्मशीलः सदा राजा इति मां मानवाः विदुः।**
**स्वधर्मान्न चलिष्यामि नकुलो यक्ष जीवतु।।**

एतत् श्रुत्वा तैः पृष्टं यत् अत्रार्जुनः अपि अस्ति किन्तु भवता नकुलः किमर्थम् अकथयत्। तदा तेन भणितम्–

**कुन्ती चैव तु माद्री च द्वे भार्ये तु पितुर्मम**
**उभे सपुत्रे स्यातां वै इति मे धीयते मतिः।**
**यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः**
**मातृभ्यां सममिच्छामि नकुलो यक्ष जीवतु।।**

पश्यन्तु सममेवं सर्वेषाम् अधिकाराणां संरक्षणविषये प्राचीनकालादेव दृष्टिः आसीत् इति प्रतीयते एव।

अस्मिन् एव प्रसङ्गे प्रह्लादः कथयति आरम्भकालादेव मानवेन धर्माचरणं करणीयम्। भागवतस्य सप्तमस्कन्धे भणितमस्ति–

**कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह।**
**दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम्।।**[1]

सर्वेषु जन्मसु मानवजन्म दुर्लभं वर्ततेऽतः ब्रह्मणा सर्वं निर्मितं किन्तु प्रसन्नतां न जगाम तदा सर्वान्ते मानवं विधाय आनन्दं प्राप्नोत्। लिखितं च–

**सृष्ट्वा पुराणि विविधान्यजयात्मशक्तया**
**वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्।**
**तैस्तैरतुष्टहृदयः पुरुषं विधाय**
**ब्रह्मावलोकधिषणमुदमाप देवः।।**[2]

1. भा. 7.6.1
2. भा. 11.8.28

निष्कर्षरूपेण मानवः समाजस्य सर्वोत्कृष्टप्राणिः तस्याधिकाराणां संरक्षणं मानवस्य मानवनिर्माणमात्रप्रक्रियया कर्तुं शक्यते। सर्वस्य चिन्तनम् उदारम् उत्कृष्टम् आदरयोग्यं च भविष्यति तर्हि अवश्यं मानवाधिकारहननस्य समस्या एव समाजात् व्यपगता भविष्यति। भारतीयपरम्परायां मानसिकहिंसापि दोषाय कल्प्यतेऽतः उच्यते- **'मानस पुण्य होय नहि पापा'** अनेन स्पष्टं जायते भारतानुरोधेन सततं सर्वेषां संरक्षणाय प्रयत्नः करणीयः इति शम्।

## सन्दर्भग्रन्थसूची


- मानव अधिकार शिक्षण, प्रशिक्षण एवं संरक्षण (द्वितीयवर्ष) भारतीय मानव अधिकार संस्थानम्, डॉ. राहुल रायः, नई दिल्ली- 115030
- मानव अधिकार शिक्षण, प्रशिक्षण एवं संरक्षण (प्रथमवर्ष) भारतीय मानव अधिकार संस्थानम्, डॉ. राहुल रायः, नई दिल्ली- 115030
- भारत का संविधान, लोक-सभा-सचिवालय-प्रकाशनम्, दिल्ली 21 नवम्बर 2016
- गौतमधर्मसूत्राणि, डॉ. उमेशचन्द्रपाण्डेयः, चौखम्भा-संस्कृत-संस्थानम्, वाराणसी, तृतीय, वि.सं. 2056
- मनुस्मृतिः, पं. हरगोविन्दशास्त्री, चौखम्भा-संस्कृत-भवनम्, वाराणसी।
- आपस्तम्बधर्मसूत्रम्, डॉ. नरेन्द्रकुमार-आचार्यः, विद्यानिधिप्रकशानम्, दिल्ली, प्रथमसंस्करणम्-2010
- याज्ञवल्क्यस्मृतिः, पं. थानेशचन्द्र-उप्रैति, परिमल-पब्लिकेशन्स, दिल्ली, संस्करणं प्रथमम्-2018
- आधुनिकहिन्दुविधिः, प्रो. किशोरचन्द्रमहापात्रः, उर्मिलामहापात्रपब्लिकेशन, उडीशा, 2010
- धर्मशास्त्र का इतिहास, पी.वी. काणे, अनुवादकः - अर्जुनचौबेकश्यपः, उत्तरप्रदेश-हिन्दी-संस्थानम्।
- https.//hi.m.wikipedia.org
- https.//hi.m.wikipedia.org
- nhrc.nic.in
- hi.vikipedia.in

UGC - CARE Listed
अप्रैल-जून, 2021

शोधप्रभा
वर्ष : 46, द्वितीयोऽङ्कः

# वेदान्तसम्प्रदायभेदे प्रमाणमीमांसा

डॉ0 सरोजकुमारपाढ़ी*

वेदान्तशब्दो हि वेदानामन्त इति समासेन उपनिषदर्थकः। उपनिषदश्च वेदानाम् अन्त इति वेदान्तशब्देन उपनिषल्लक्ष्यते। चरमज्ञानाधायकत्वेन वेदस्य अन्तश्चरमसीमेति समासेनापि वेदान्तशब्देन औपनिषदं ज्ञानं स्वयमुपनिषदो वा परिलक्षते। श्रुतिपर्याया वेदा उपनिषदश्च वेदान्तस्य आधारः इति। भारतीयानां सर्वमान्य-प्रामाणिकः ग्रन्थः वेदः। वेदस्य रूढार्थः ज्ञानमिति तस्य अन्तः यत्र दृश्यते स वेदान्तः। वेदान्तप्रक्रियायाः तत्त्वानां विशद्वर्णनं ऋक्संहितायामुपलभ्यते। वेदस्य हिन्दुसर्वमान्यप्रामाणिकग्रन्थस्य अन्तः सारभागो वा वेदान्तः। इत्थं बहुब्रीहिणा तत्पुरुषेण वा वेदान्तः प्रकृत्यैव वेदाधारः। अस्य सिद्धान्तस्य वेदसारभूतत्वं मुक्तिकोपनिषदि प्रतिपादितं यथा-

निःश्वासभूता य विष्णोर्वेदा जाताः सुविस्तराः।
तिलेषु तैलवत् वेदे, वेदान्तः सुप्रतिष्ठितः॥[1]

वेदान्तपरिभाषमाणेन सदानन्देन च वेदान्तो नामोपनिषत्प्रमाणम् इत्थमुपनिषत् प्रमाणः सिद्धान्तः वेदान्तः प्रतिपादितः। अस्यैव वेदान्तदर्शनस्य मतपार्थक्यवसात् भिन्नभिन्नवादाः प्रचलिताः तत्र अद्वैतवादः, विशिष्टाद्वैतवादः, द्वैतवादः, शुद्धाद्वैतवादः, द्वैताद्वैतवादः भेदेन प्रथिताः। अद्वैतवादस्य प्रवर्तकाचार्यः आचार्यशङ्करः, विशिष्टाद्वैतवादस्य आचार्यः रामानुजः, द्वैतवादस्य मध्वाचार्यः, द्वैताद्वैतवादस्य निम्बार्काचार्यः तथा शुद्धाद्वैतवादस्य प्रवर्त्तक आचार्यः बल्लभः आसीत्। एते आचार्याः स्वमतसम्प्रदायस्य प्रतिपादनम् आकाट्यतर्कैः कृतवन्त इति तेषां साहित्याध्ययनेन सम्यक् परिज्ञायते। वेदान्तसंप्रदायस्य आधारग्रन्थः ब्रह्मसूत्रं तत्र च आचार्याणां भाष्यमत्यन्तं सारगर्भितं चास्ति। वेदान्तसंप्रदाये प्रमाणमीमांसा आचार्यानुगुणं सम्प्रदायानुगुणञ्च भिन्नभिन्नमिति परिलक्षते वेदान्तसम्प्रदाये आचार्याणां प्रमाणविषयकचर्चा कीदृशीति परीक्षितुं पत्रमिदमुपस्थाप्यते।

शारीरक-श्रीभाष्य-वेदान्तपारिजात-पूर्णप्रज्ञा-अणुभाष्यानि सम्प्रदायभेदेन

---

* सह-आचार्यः, वैदिकदर्शनविभागः, सं.वि.ध.वि. संकायः, का.हि.वि.वि.

1. मुक्तिकोपनिषद् 1.9

अद्वैत-विशिष्टाद्वैत-द्वैताद्वैत-(भेदाभेद)-द्वैत-शुद्धाद्वैतवादं क्रमेणोपस्थापयन्ति। इमानि सर्वाणि भाष्याणि शास्त्रार्थप्रणाल्या (वादपद्धत्या) लिखितानि वर्तन्ते। वादश्च खलु गौतमसूत्रवृत्तौ वात्स्यायनानुसारेण "नाना प्रवक्तृकः पत्यधिकरणसाधनः अन्यतराधिकरणनिर्णयावसानः वाक्यसमूहः।"[1] सर्वदर्शनसंग्रहानुसारेण च "तत्वनिर्णयफलः कथाविशेषो वादः।"[2] इत्थं च सर्वथा सत्यनिर्णयो वादः इति प्रसिद्धया "वादे वादे जायते तत्त्वबोधः"[3] इत्यादौ तथैव तस्य प्रयोगः दृश्यते।

भाष्यकारै गृहीता एषा वादपद्धतिः वादरायणस्य सूत्राणां रचनाकालत एव प्रचालत्। ब्रह्मसूत्रेषु एव प्रतिज्ञा हानिः[4] अनवस्था[5], इतरेतराश्रयत्वम्[6] इत्याद्येतदृशानेकपारिभाषिक-शब्दानां प्रयोगः लभ्यते। एतेषां शब्दानां सम्बन्धः विशेषेण वादपद्धत्या एव वर्तते। एतस्मिन् प्रसंङ्गे स्वपक्षे दोषाच्च[7] एतत्सूत्रद्वयं विशेषेण द्रष्टव्यम्। एतदानुपूर्विसूत्रद्वये एवंभूता युक्तयः उत्थापिताः यासाम् अर्थावसानं निरनुयोग्यानुयोगनामकनिग्रहस्थाने संजातं वर्तते।

अस्यां पद्धतौ प्रमाणानां महत्वपूर्णं स्थानम्। स्वपक्षपुष्ट्यर्थं हि तेषामनुपदमावश्यकत्वम्। प्रमाणरहितं च न किमपि मान्यतापदवीमारोहति। अत एव चित्सुखाचार्येणापि मानाधीना मेयसिद्धिः[8] इति प्रतिपादितम्। प्रमाणमेव हि न्यायशास्त्रस्याधारः अतः एव च तत् प्रमाणशास्त्रम् उच्यते। प्रमाणसाहाय्येन यस्य कस्यचिदपि सूक्ष्मसमीक्षणं तल्लक्ष्यम्। प्रमाणमेव च ज्ञान प्राप्तेरेकमात्रं साधकतमं कारणम् इति प्रामाणिकनिष्कर्षः। अत एव प्रमाणानां स्वरूपे तत्क्षेत्रे च ज्ञाते सति लक्षणसमन्वयेन सरलतया वास्तविकं ज्ञानमुपजायते इति न्याय (तर्क) प्रस्थाने वेदान्तदर्शने तद्विवेचनस्य अत्यन्तावश्यकत्वम्। तेषां प्रमाणानां मीमांसा भिन्नभिन्नदर्शनेषु भिन्नभिन्नरूपेण कृता वर्तते। तेषां संख्या अपि भिन्ना तथापि प्रकृतभाष्याणां परिचये प्रकृताचार्यपञ्चकमीमांसितप्रमाणानामेव संक्षिप्तनिर्देशः प्रासंगिकः।

प्रमाणबलेनैवास्माकं यथार्थज्ञानं जायते। यथार्थज्ञानमेव च प्रमा। कालान्तरेणानुभवेन प्रमाणान्तरेण वा यन्न मिथ्या तदेव यथार्थमिति। तथ्यानां यथार्थतया विरोधाभावस्य चैव प्रामाण्यम्। अत एव प्रमायाः लक्षणं कुर्वता वेदान्तपरिभाषाकारेण धर्मराजाध्वरीन्द्रेण अनधिगतावाधितार्थविषयज्ञानत्वं[9] प्रमात्वम् इत्युक्तम्।

प्रमाणस्वरूपनिरूपणे अद्वैतवेदान्तेन साधारणतया मीमांसापद्धतिरेव अनुसृतेति,

---

1. वात्सायनभाष्यम् पृ. 3
2. सर्वदर्शनसंग्रहः पृ. 239
3. सुभाषितम्
4. प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ब्र.सू. 2.3.9
5. अनवस्थितेरसम्भवाच्च नेतरः ब्र.सू. 4.1.15
6. इतरेतरप्रत्ययत्बादिदितिचेन्नोत्पत्तिमात्रनिमित्तत्वात् ब्र.सू. 2.2.19
7. ब्र.सू. 2.1.10।2.1.19
8. चित्सुखी 2.18
9. वे.प. पृ 1

मीमांसकैरिव तैरपि ज्ञानस्य स्वतः प्रामाण्यमेव स्वीक्रियते। यद्यपि शंकरपरकालिकभाष्यकारैः कुमारिलभट्टाभिमतप्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धीति प्रमाणषटकस्योल्लेखः कृतः तथापि जैमिनिना प्रत्यक्षानुमानशब्देति प्रमाणत्रयमेव स्वीकृतम्। तदेव च शङ्करेणाप्यनुसृतम्।

अद्वैतवेदान्तनये ब्रह्मणः सम्बन्धे प्रमाणानां विशिष्टं स्थानम् आत्मज्ञाने च प्रमाणानां गौणरूपेण सहायकत्वं स्वीकृतम्। शङ्करमतानुसारेण तेषां केवलमेतत्कार्यं यत् तानि आत्मचैतन्यावरणमपसारयन्ति, आवरणरूपविघ्नापसरणानन्तरमेव च स्वतः प्रकाशितं चैतन्यं स्वयमेवाभिव्यक्तं संजायते।

**न प्रकाश्यं प्रमाणेन प्रकाशो ब्रह्मणो स्वयम् ।**
**तज्जन्यावृत्तिभंगत्वात् प्रकाशो ब्रह्मणः स्वयम्[1]।।**

यथा च स्वतः प्रकाशचेतनाभिव्यक्तौ प्रमाणानां न किमपि सहाय्यं तथैव आत्मनः सत्तां प्रमाणयितुमपि न तान्यावश्यकानि। ज्ञानस्य सपूर्णं साधनं स्वानुभवे भविष्यति इति एवं भूतः अनुभव एव स्वतः प्रामाण्यम्।

''आत्मा तु, प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिध्यति, न च ईदृशस्य निराकरणं सम्भवति। आगन्तुको हि वस्तु निराक्रियते न स्वरूपम्। य एवं हि निराकर्त्ता तदैव तस्य स्वरूपम्।''[2] अर्थात् आत्मनः अस्तित्वं न अस्वीकर्त्तुं शक्यते य एवं हि अस्वीकर्त्ता तदैव तस्य स्वरूपमिति स स्वयंसिद्धः 'स्वयंसिद्धस्य साक्षिणोऽ-प्रत्याख्येयत्वात्।[3] यथार्थज्ञानेन नात्मनः सिद्धिः कर्त्तुं शक्यते तस्य स्वयं सिद्धत्वात् इति भावः । एवमेव एतदपि तर्कसंगतं यत् अज्ञानस्य अस्तित्वं प्रमाणयितुमपि प्रमाणं व्यर्थम्। अज्ञानस्य स्वरूपं केनापि प्रमाणेन स्थापयितुं न शक्यते। अज्ञानं हि अन्धकारसमानम्; प्रमाणं च प्रकाशस्वरूपमिति प्रकाशसहाय्येन अन्धकारस्य प्रत्यक्षत्वं न सम्भवति। रामानुजः यथार्थज्ञानप्रापकं (प्रमाकरण) प्रमाणम् इति मन्यते। तन्मते प्रत्यक्षानुमानशब्दा इति त्रयमेव प्रमाणम् एतच्च तेन जिज्ञासाधिकरणे स्पष्टीकृतम्।[4] एतन्मते ज्ञानस्य स्वतः प्रामाण्यम्। स एतदपि मनुते यत् अनुभवस्वरूपं स्वसत्तैव, यावत्स्थिति, स्वतः प्रकाशशीलम्। यतो हि तदाधारः आत्मा प्रकाशशीलः। शब्दान्तरैस्तदित्थं प्रतिपादयितुं शक्यते यत् अनुभवो निजविषयप्रमाणीकरणस्य साधनम्, तथाहि ''अनुभूतित्वं नाम वर्तमानतादशायां स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम्। स्वसत्तयैव स्वविषयसाधनत्वं वा।''[5]

रामानुजः एतत्स्वीकरोति यत् सर्वेषां प्रमाणानां सम्बन्धः स्वविशेषपदार्थैः सह वर्तते।

---

1. सर्वदर्शनसंग्रहः पृ. 415
2. शा.भा. 2.3.7
3. शा.भा. 1.2.28
4. श्री.भा. महासिद्धन्ते
5. श्री. भ. 1.1.1

तत्सिद्धान्तानुसारेण विवेक एव चेतनस्य महत्त्वपूर्णावश्यकविशेषता वर्तते। यावच्च वयं कस्याऽपि पदार्थस्य आवश्यकविशेषतां न जानीमहे तावत्तद्विषयकं ज्ञानं भवितुं न शक्यते। यतो हि येन केनचित् विशेषणेन विशिष्टस्यैव पदार्थस्य ज्ञानं सम्भवति। अतः ये इत्थं स्वीकुर्वन्ति यत् एवंभूतमपि किमपि तत्त्वं वर्तते यत् निर्गुणम् (निर्विशेषम्) अस्ति ते एतत्प्रमाणयितुं किमपि प्रमाणमुपस्थापयितुं न शक्नुवन्ति। ''निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न दृश्यते वक्तुम्, सविशेषस्तु विषयत्वात् सर्वप्रमाणानाम्।''[1] ''किञ्च सर्वप्रमाणस्य सविशेषविषयतया निर्विशेषवस्तुनि न किमपि प्रमाणमस्ति।''[2]

प्रमाणानां विषये अन्यभाष्यकाराणां विचाराः एतदपेक्षया सरलाः, दार्शनिकोपयोगदृष्ट्या च न तावन्महत्त्वपूर्णास्तथापि एतस्यां दिशि तेषा पृथक् पृथक् स्वकीयं वैशिष्ट्यम्।

निम्बार्कानुयायिभिः प्रत्यक्षानुमानश्रुतीनां प्रामाण्यं स्वीकृतम्। एतेषु ब्रह्मज्ञानं केवलं श्रुतिप्रामाण्येनैव भवितुं शक्नोति। एतत् कदापि न विचारणीयं यत् ब्रह्म श्रुतिवाक्यसाधन-द्वारा ज्ञानस्य विषयो न भवितुं शक्नोति- ''वेदैकप्रमाणमेव ब्रह्मेति सिद्धान्तः।''[3] तथा ''ननु प्रत्यक्षादिप्रमाणविषयत्वात् शब्दप्रमाणाविषयत्वस्यापि श्रुतिसिद्धत्वात् न शास्त्रैकप्रमेयं ब्रह्मेति प्राप्ते ब्रुमः। जिज्ञास्यं ब्रह्म शास्त्रप्रमाणकमेव नान्यप्रमाणकम्।''[4]

साधारणेन्द्रियाणि ब्रह्मसाक्षात्कारयितुं सर्वथा असमर्थानीति न तैः ब्रह्मसाक्षात् कर्त्तुं शक्यते न च प्रत्यक्षप्रमाणगम्यं ब्रह्म; तद् ग्रहणे हि साधारणानामिन्द्रियाणामसामर्थ्यात्।[5]

एतावत् सूक्ष्मं हि ब्रह्म यत् तज्ज्ञानसाधनरूपे अनुमानादयः विचारयितुमप्यशक्याः ''किं च सर्वज्ञैर्मन्त्रैः ऋषिभिश्च साकल्येन सर्वथा अगम्यं दुर्बोधमचिन्त्यानन्तगुणशक्त्यादिमज्ज-गत्कारणं ब्रह्म अनुमानादिवेद्यमिति कोऽनुन्मतो ब्रूयात्।''[6]

निम्बार्कमते ज्ञानं जीवस्य विशेषधर्मः। तदुत्पत्तौ च न वृत्तेरावश्यकता। जीवो ज्ञानस्वरूपमप्यस्ति तथापि जीवज्ञानयोधर्मभावस्वीकार एव श्रेयान्-

''जीवतज्ज्ञानयोर्ज्ञानत्वाविशेषे अपि धर्मधर्मिभाव युक्त एव''[7]

जीवात्मा शुद्धप्रकाशस्वरूपस्तथापि स वास्तविको ज्ञाता मन्यते- ''अहमर्थभूत एव आत्मा ज्ञाता भवति।''[8]

निम्बार्कानुयायिनः प्रमाणानां प्रामाण्यं शङ्करानुसारमेव मन्यन्ते।

मध्वाचार्येण यथार्थज्ञानस्य प्रत्यक्षानुमानशब्दाः इति प्रमाणत्रयमेव स्वीकृतम्।

---

1. श्री. भा. 1.1.1
2. सर्वदर्शन संग्रह 107
3. वे.क. ब्र.सू. 1.1.3
4. नि.भा.ब्र.सू. 1.1.4
5. वे.कौ. (ब्र;सू.) 1.1.3
6. वे.कौ. (ब्र.सू.) 1.1.3
7. नि.भा. (ब्र.सू.) 2.3.27
8. नि.भा. (ब्र.सू.) 2.3.18

एतदतिरिच्य तेन यथार्थज्ञानमपि स्वयम् एतद्दृष्ट्या प्रमाणं स्वीक्रियते यत् तत् तस्य कस्यचिदपि तथ्यस्य साक्षाद्ज्ञानं कारयति न तु परम्परया। अतो न तज्ज्ञानस्य साधनम्। रामानुजश्चोभयं स्वीकरोति। 1. यथार्थज्ञानं ज्ञानरूपेणापि प्रमाणम् 2. ज्ञानसाधनरूपेणापि प्रमाणाम्। इत्थं तन्मते कस्यचिदपि विषयस्य ज्ञानार्थं केवलप्रमाणमनुप्रमाणं चैतत्साधनद्वयम्। तत्र अनुप्रमाणस्यैव प्रत्यक्षादय त्रयः भेदाः।

दार्शनिकविषयेषु मध्वाचार्यमते अनुमानस्य किमपि महत्त्वपूर्णं स्थानम्। तस्य एतत्कथनं यत् अनुमानेन यः कश्चिदपि स्वाभिमतं यं कमपि निष्कर्षं प्राप्तुं शक्नोति। अतः अनिश्चितहेतोः सत्यस्य निश्चित्यै अनुमानं स्वतन्त्रं साधनं भवितुमर्हति। ते यथा न चानुमानस्य स्वातन्त्र्येण प्रामाण्यम्[1], यथाकामं हि अनुमातुं शक्यते, अतो न तत्त्वे पृथगनुमानापेक्षते, उक्तञ्च स्कान्दे- ''यथाकामानुमा यस्मात् तस्मात् सानपगा''[2] इति श्रुतेः।

श्रुतिसाहाय्येनैव तत्प्रामाण्यं समुचितमिति वक्तुं शक्यते इत्थं च श्रुतिवाक्यसहायं बिना अनुमानं न किमपि वस्तुं निर्णेतुं शक्नोति। स्वकीयम् एतन्मतं प्रमाणयितुं पुराणादीनामनेके श्लोकाः उद्धृताः। तथाहि-

**श्रुतिसाध्यरहितम् अनुमानं न कुत्रचित्।**
**निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च॥**
**श्रुतिस्मृतिसहायं यत् प्रमाणान्तरमुत्तमम्।**
**प्रमाणपदवीं गच्छेन्नात्र कार्या विचारणा॥[3]**

वराहपुराणस्य उद्धरणमेतत्प्रमाणयति यत् श्रुतिवाक्यसहायमन्तरेण प्रत्येकविधानुमानं कर्तुं शक्यते किन्तु श्रुतिसहायं विना तत्र न किमप्यनुमानं निर्णायकं भविष्यतीति। तथाहि-

**सर्वत्र शक्यते कर्त्तुमागमं तु विनाऽनुमा।**
**तस्मान्न सा शक्तिमती विनागममुदीक्षितुम्॥[4]**

स्कन्दपुराणस्य एतत्कथनं यत्-

**यथाकामानुमा यस्मात् तस्मात्सानपगाश्रुते।**
**पूर्वापरविरोधाय चेष्यते नान्यथा क्वचित्॥[5]**

पुरुषोत्तमतन्त्रे च क्वचिच्छ्रुतिवाक्यविरोधे तार्किकयुक्तीनां किंचित् उपयोगित्वं प्रतिपादितम् -

---

1. म.भा. (ब्र.सू. 1.1.2)
2. म.भा. (ब्र.सू. 1.1.18)
3. कुर्मपुराणवचनम्
4. तत्रैव वराहपुराणे
5. म.भा. ब्र.सू; 1.1.18

**यद्वाक्योक्तं न तद्युक्ति विरोद्धुं शक्नुयात् क्वचित्।**
**विरोधे वाक्ययोः क्वापि किञ्चित्साहाय्यकारणम्।।**[1]

किन्तु ब्रह्मसाक्षात्कारे श्रुतिवाक्यमेव केवलं प्रमाणमित्येतस्मिन् विषये प्रत्यक्षस्य न किमपि स्थानम्। ज्ञानस्य स्वतः प्रामाण्यं तु रामानुजवत् मध्वाचार्येणापि स्वीकृतम्।

वल्लभाचार्येण सर्वाणि प्रमाणानि स्वीक्रियन्ते तथापि तदनुसारं श्रुतिरेव प्रामाण्यम्। अन्येषां तु तावदेव प्रामाण्यं यावत् न तेषां श्रुतिवाक्यैर्विरोधः। वादानां स्वतः प्रामाण्यम् ''अतो निरपेक्षा एवं भगवन्निश्वासरूपा वेदाः एव प्रमाणम्।''[2]

ज्ञानस्य अन्यत् साधनम् प्रत्यक्षादि प्रामाण्यार्थमन्याश्रितम् इति न तत् स्वातन्त्रेण प्रमाणम्; चक्षुरादीनां प्रामाण्यमन्यमुखनिरीक्षकत्वेन, न, स्वतः।[3]

वल्लभमते वेदानां प्रत्यक्षरं प्रामाणिकम् इति तत्र यत्किमप्युक्तं तेनाक्षरशः सत्येन भवितव्यम्। अन्यथा श्रुतेः प्रत्येकभागे अविश्वासः सम्भवेत्। तेनोक्तं यत् वेदश्च परमाप्तः अक्षरमात्रमपि अन्यथा न वदति। अन्यथा सर्वत्रैव तदविश्वासप्रसंगात्[4] ब्रह्मस्वरूपमिति सूक्ष्ममिति तज्ज्ञानार्थं श्रुतिरेवैकमात्रं साधनम्।

इत्थं प्रमाणमीमांसाविषये वेदान्तसम्प्रदायभेदे आचार्याणां मतं संक्षेपेण निर्देशितम्। प्रत्येकस्य प्रमाणस्य चर्चापि विस्तृतेन वर्त्तते अतः केवलम आचार्याणामभिमते सामान्यप्रमाणस्य यावद्धारणा सा अत्र उपस्थापिता तत्र सम्प्रदायभेदे भिन्नतापि दरीदृश्यते इति।

## सन्दर्भग्रन्थसूची


1. वात्स्यायनभाष्यम्, चौखम्बा संस्कृत सीरीज, वाराणसी, 1970
2. सर्वदर्शनसंग्रहः, चौखम्बा विद्याभवनम्, वाराणसी, 1964
3. ब्रह्मसूत्रशाङ्करभाष्यम्, निर्णयसागर-प्रेस, बम्बई, 1909
4. चित्सुखी, उदासीन-संस्कृतविद्यालयः, काशी, 1956
5. वेदन्तपरिभाषा, चौखम्बा-विद्याभवनम्, वाराणसी, 1977
6. ब्रह्मसूत्रम् श्रीभाष्यम्, प्राच्यविद्या-संशोधनालयः, मैसूर, 1975
7. वेदान्त कौस्तुभ, सरस्वतीभवन-टेक्स्टे न. 83, इलाहाबादः
8. निम्बार्कभाष्यम्, श्री-निम्बार्क-पीठम्, प्रयागः, 2032, वि.स.
9. माध्वभाष्यब्रह्मसूत्रम्, श्री-निम्बार्कपीठम्, प्रयागः, 2031 वि.स.
10. अणुभाष्यम्, सरस्वतीभवन-टैक्स्ट नं. 63 इलाहाबादः, 1950


1. म.भा. (ब्र.सू.) 2.1.17
2. अणुभाष्यम् (ब्र.सू. 1.1.4)
3. अणुभाष्यम् (ब्र.सू. 1.1.4)
4. तत्रैव (ब्र.सू. 1.1.2)

UGC - CARE Listed
अप्रैल-जून, 2021

शोधप्रभा
वर्ष : 46, द्वितीयोऽङ्कः

# अधिकारसूत्राणि तन्महत्त्वञ्च

डॉ. प्रज्ञा*

भारतीयपरम्परायां संस्कृतभाषा महत्त्वपूर्णां भूमिकां निर्वहति। संस्कृतं प्रति अवलोकयन्तः समेऽपि संस्कृतव्याकरणं प्रति श्रद्धाभावेन समर्पिताः नताः आशान्विताः च भवन्ति, संस्कृतव्याकरणे अनेकपारिभाषिकशब्दाः सन्ति ये एकत्र पठ्यन्ते किन्तु बहुत्र स्वीयं प्रभावं ज्ञानं कारयन्ति। तत्रैव कश्चन अधिकारशब्दः वर्तते अयं विशिष्टं रूपं तदा धरति यदा अधिकारसूत्राणि इति नाम्ना व्यवह्रियते। अधिकारसूत्राणि एकत्र उच्यते अपरत्र अर्थम् उत्पादयति, अत्रादौ असौ अधिकारशब्दः विविच्यते। अध्युपसर्गपूर्वकात् कृधातोः घञ्-प्रत्यये कृते सति अधिकारशब्दः निष्पद्यते। लोके प्रायः स्वामित्वे अर्थे अधिकारशब्दस्य प्रयोगः दृश्यते। अत्र हि व्याकरणशास्त्रे अयमधिकारः लौकिकाधिकारात् भिन्नः भवति। अत्र हि ''एकत्र उपात्तस्य अन्यत्र व्यापारः अधिकारः''[1] इति। ईदृशः अधिकारः व्याकरणशास्त्रे केषां भवेत् इति व्यवस्थापयितुं महर्षिणा पाणिनिना ''स्वरितेनाधिकारः''[2] इति सूत्रं निर्मितं वर्तते। अर्थात् यत् पदं शास्त्रकृता स्वरितत्वस्वरविशेषयुक्तम् उच्चारितं भवति तस्य उत्तरत्रानुवृत्तिः भवेदिति। यथा 'कारके'[3], 'प्रत्ययः'[4], 'परश्च'[5] इत्यादीनि सूत्राणि। अस्य अधिकारस्य त्रयः भेदाः शास्त्रे अङ्गीकृताः सन्ति। तद्यथा-

**सिंहावलोकितं चैव मण्डूकप्लुतमेव च।**
**गङ्गाप्रवाहवच्चापि अधिकारस्त्रिधा मताः॥[6] इति।**

अयं भावः - प्रवृत्त्याधारेण अधिकारः त्रिविधः भवतीति स्वीकृतं वर्तते। तद्यथा-

- सिंहावलोकनवत्
- मण्डूकप्लुतिवत्
- गङ्गाप्रवाहवच्च

---

*सहायकाचार्या, वेदव्याकरणविभागः कविकुलगुरुकालिदाससंस्कृत-विश्वविद्यालयः, रामटेकम् नागपुरम्, महाराष्ट्रम्

1. सि.कौ.(गो.द.पा.), ख.-1, परिशिष्टम्, पृ.-821
2. पा.सू.1.3.11
3. पा.सू.1.4.23
4. पा.सू.3.1.1
5. पा.सू.3.1.2
6. सि.कौ.(गो.द.पा.), ख.-1.परिशिष्टम्, पृ.-821

**सिंहावलोकनवत्**- अधिकारस्य सिंहवद्व्यवहारत्वात् एष भेदः कल्पितः वर्तते। यथा- 'उदि श्रयतियौतिपूद्रुवः'[1] इत्यत्र 'विभाषाऽऽङि रुप्लुवोः'[2] इत्यतः 'विभाषा' इत्यस्य सम्बन्धः सिंहावलोकनेन भवति। तदुक्तं काशिकाकारेण-''वक्ष्यमाणं विभाषाग्रहणमिह सिंहावलोकितन्यायोन सम्बध्यते''[3] इति। तेन वक्तुं शक्यते-यत्र परसूत्रस्याधिकारः पूर्वसूत्रे आयाति तादृशः सिंहावलोकनवदधिकारः भवति।

| यस्याधिकारः ( परसूत्रम् ) | व्यवधानम् | यत्राधिकारः ( पूर्वसूत्रम् ) |
|---|---|---|
| 'विभाषाऽऽङि रुप्लुवोः' (3.3.50) इत्यतः विभाषा इत्यस्याधिकारः | नास्ति | 'उदि श्रयतियौतिपूद्रुवः'(3.3.49) |

**मण्डूकप्लुतिवत्**- मण्डूकवत् उत्प्लुत्य उत्प्लुत्य यस्याधिकारस्य गतिः तादृशः मण्डूकप्लुतिवदधिकारः उच्यते। यथा- 'परिक्रयणे सम्प्रदानमन्यतरस्याम्'[4] इत्यतः 'अभिनिविशश्च'[5] इत्यत्र 'अन्यतरस्याम्' इत्यस्य अनुवृत्तिः मण्डूकप्लुत्या भवति। तथोक्तं कौमुद्याम्-'परिक्रयणे सम्प्रदानम्' इति सूत्रादिह मण्डूकप्लुत्या अन्यतरस्यां ग्रहणमनुवर्त्य व्यवस्थितविभाषाश्रयणात् क्वचिन्न''[6] इति। तेन वक्तुं शक्यते- यत्र व्यवहितेऽपि अधिकारः तादृशः मण्डूकप्लुतिवदधिकारो भवतीति।

| यस्याधिकारः ( पूर्वसूत्रम् ) | व्यवधानम् | यत्राधिकारः( परसूत्रम् ) |
|---|---|---|
| 'परिक्रयणे सम्प्रदानमन्यतरस्याम्'(1.4.44) इत्यतः अन्यतरस्याम् इत्यस्य | • आधारोऽधिकरणम्<br>• अधिशीङ्स्थाऽऽसां कर्म | अभिनिविशश्च (1.4. 47) |

**गङ्गाप्रवाहवच्च**- सर्वोऽपि अधिकारः प्रायः गङ्गाप्रवाहवदेव भवति। यस्य अप्रतिहतानुवृत्तिः उत्तरत्र सूत्रे तादृशः अधिकारप्रकारः गङ्गाप्रवाहवदित्युच्यते। यथा- 'प्राक्कडारात्समासः'[7], 'पूर्वत्रासिद्धम्'[8] इत्यादयः।

---

1. पा.सू.3.3.49
2. पा.सू.3.3.50
3. का.वृ., सू.-3.3.49
4. पा.सू.1.4.44
5. पा.सू.1.4.47
6. सि.कौ., ख.-1, सू.-535(अभिनिविशश्च)
7. पा.सू.2.1.3
8. पा.सू.8.2.1

| यस्याधिकारः ( पूर्वसूत्रम् ) | यत्राधिकारः( उत्तरसूत्राणि ) |
|---|---|
| 1. 'प्राक्कडारात्समासः'(2.1.3) इतः समास इत्यस्य<br>2. 'पूर्वत्रासिद्धम्'(8.2.1) | • 'कडाराःकर्मधारये' (2.2.38) इत्यतः प्राक्।<br>• अध्यायपरिसमाप्तिपर्यन्तम्। |

**अधिकारसूत्राणां महत्त्वम्-**

सूत्राणि अल्पाक्षरैः अर्थकथनत्वात् महत्त्वपूणानि भवन्ति। तत्राऽपि अधिकारसूत्राणि तु पौनःपुन्येन लेखनकष्टमपि अपाहरन्ति। अधिकारसूत्राणां वैशिष्ट्यमेवेदम् एतेषां सर्वादरणीयत्वं प्रतिपादयति। अधिकारसूत्रैः विधिसूत्राणाम् एकत्र **अल्पाक्षरत्वं रक्ष्यते** अपरत्र **अर्थसम्पादनेऽपि साहाय्यं** क्रियते। अधिकारः सम्पूर्णसूत्रस्य सूत्रांशपदस्य पदांशस्य चापि भवति। यथा-'धातोः'[1], 'अङ्गस्य'[2], 'प्रत्ययः'[3] इत्यादीनां सम्पूर्णसूत्राणाम् उत्तरत्र अनुवृत्तिः भवति। 'प्राग्दीव्यतोऽण्'[4], 'प्राग्वहतेष्ठक्'[5] इत्यादीनां सूत्रांशपदस्यानुवृत्तिः भवति। अधिकारसूत्रं पाणिनीयव्याकरणस्य प्रक्रियायाः असन्दिग्धप्रवृत्तये अतीव महत्त्वपूर्णां भूमिकाम् आवहति। महर्षिणा पतञ्जलिना अपि अधिकारविषये उक्तम्- **''अधिकारः प्रतियोगं तस्याऽनिर्देशार्थ इति योगे योगे उपतिष्ठते''**[6] इति। अर्थात् सूत्रात्मकशैल्या व्याकरण-स्वरूपरचनायै अधिकारसूत्राणां रचना कृता वर्तते। अष्टाध्याय्यां **74** अधिकारसूत्राणि सन्ति। तेषाम् असन्दिग्धसूत्रार्थबोधे तु साहाय्यं भवत्येव। किन्तु तानि एकस्यैव शब्दस्य पुनरावृत्तिं निरोधयितुं महत्त्वपूर्णं कार्यं कुर्वन्ति। यावत् सीमा परिधिः वा निर्धारिता भवति उच्चारणं विनैव अधिकारः तत्र उपतिष्ठते। यथा- वैयाकरणसिद्धान्तकौमुद्यां प्रथममधिकारसूत्रं वर्तते 'पूर्वत्रासिद्धम्'[7] इति। तस्यैव स्थितिं विचारयामश्चेत् अस्माभिः ज्ञायते यत् अस्याधिकारः अष्टमाध्यायस्य चतुर्थपादं यावत् गच्छति। अत एव उक्तं सिद्धान्तकौमुद्याम् 'अ अ' इति सूत्रस्य वृत्तौ -''अस्य चाष्टाध्ययीं सम्पूर्णां प्रत्यसिद्धत्वात्.....0''[8]। यदि एतत् 'पूर्वत्रासिद्धम्' स्वतन्त्रविधिः स्यात् तर्हि केवलं 'सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा' एतावानेवार्थः लभ्येत। किन्तु अयं न केवलं स्वतन्त्रविधिः अपितु अधिकारः अप्यसौ। तेन इतः परं

1. पा.सू.3.1.91
2. पा.सू.6.4.1
3. पा.सू.3.1.1
4. पा.सू.4.1.83
5. पा.सू.4.4.1
6. म.भा.,आ.-2,(सू. 2.1.1)
7. पा.सू.4.2.1
8. सि.कौ., सू.-11

यत्किमपि सूत्रं वर्तते तत्रास्य उपस्थितिः भवति। यथा – इतः परं सूत्रं भवति **'नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति'** इति। तत्र 'पूर्वत्रासिद्धम्' इति शास्त्रम् उपतिष्ठते तेन 'इदञ्च शास्त्रं पूर्वत्रासिद्धम्' इति तत्र सूत्रबलेन अर्थः गच्छति।

एवमेव अग्रे यत्किमपि सूत्रमायाति तत्र अस्योपस्थित्या 'इदञ्च शास्त्रं पूर्वत्रासिद्धम्' इत्यर्थः गच्छति। अर्थात् पूर्वशास्त्रदृष्ट्या परं शास्त्रमसिद्धं भवतीति। यदि अधिकार एष न स्यात् तर्हि समानमेव सर्वत्र उच्चारणीयं स्यात्। तेन च महद्गौरवम् आवृत्त्या स्यात्। अतः शास्त्रसंक्षेपणाय अपि अधिकारसूत्रम् अत्यन्तं महत्त्वपूर्णं भवति।

**अधिकारस्वरूपविमर्शः –**

सूत्राणाम् अल्पाक्षरत्वं रक्षितुं सुस्पष्टञ्च तेषामर्थं प्रतिपादयितुम् अधिकारसूत्रप्रभेदस्य महत्त्वं सर्वैः अङ्गीकृतम्। षड्विधेषु सूत्रभेदेषु एको भेदः विद्वद्भिः अधिकारोऽपि अङ्गीकृतः वर्तते। किन्तु अधिकारस्य अस्मिन् व्याकरणशास्त्रे कीदृशं स्वरूपम् इत्यपि विचारणीयो विषयः वर्तते। लोके अधिकार इत्युक्ते आधिपत्यं नियन्त्रणं वा इत्यर्थः अनुभूयते। यथा– कृषिक्षेत्रस्य सर्वेषु विषयेषु कृषिमन्त्रिणः अधिकारः भवति, नियन्त्रणं भवति। एवं वयं सामान्येन चिन्तयामश्चेत् एवं प्रतीयते यत् शास्त्रीयः अधिकारः भिन्नः लौकिकश्चाधिकारः भिन्नः। किन्तु सूक्ष्मेक्षिकया पश्यामश्चेत् उभयोः साम्यमेव व्यवहारे। अधिकारसूत्राणामपि यावत् तेषां सीमनिर्धारणं तावत् तेषां नियन्त्रणं भवति। तच्च नियन्त्रणं यद्यपि सूत्रार्थेषु भवति अथाऽपि लोकशास्त्रयोः किञ्चित् साम्यं तु अस्त्येव।

अधिकारसूत्राणि शक्तिग्राहकाणि न भवन्ति न वा संज्ञासंज्ञिप्रत्यायकानि भवन्ति। अतः संज्ञासूत्राणि न भवन्ति एतानि। एतेषां स्वस्मिन्नेव परिपूर्णता भवति। स्वार्थपरिज्ञापनाय अन्येषां सूत्राणाम् अपेक्षा एभिः न क्रियते। किन्तु अन्येषां सूत्राणाम् आर्थिकपूर्णतायै भवत्येतेषां महदुपकारः। पुनश्च अनियमे सति नियमकारिता अपि न भवति, न चैतेषां शास्त्रतात्पर्यग्राहकत्वम्, अतः परिभाषात्वमपि एतेषां न सम्भवति। एतानि सूत्राणि तु शास्त्रतात्पर्यपूरकाणि भवन्ति। सूत्रस्य तात्पर्यं तदानीमेव स्पष्टतामवाप्नोति यदा अधिकारसूत्रैः सह मिलित्वा स्वार्थबोधं कारयन्ति। पुनश्च अधिकारसूत्रं स्वतन्त्ररूपेण न किमपि विदधाति। लक्ष्यधर्मिकसाधुत्वसम्पादकत्वमपि एतैः स्वयं न कर्तुं शक्यते। अतः एतेषां विधिसूत्रत्वमपि न भवितुमर्हति। एतानि तु विधिसूत्रैः सह एकवाक्यतया एव विधानसामर्थ्यं प्राप्नुवन्ति लक्ष्यस्य साधुत्वसम्पादनमपि तदानीमपि एतैः गौणतया कर्तुं शक्यते।

अधिकारसूत्राणां पुनः केनचित् प्राप्तौ सत्यां विधानं न क्रियते अपितु भिन्नमेव मार्गं संदिशति एतदन्येषां सूत्राणां कृते। अन्यैः सह पुनरस्य विषयविवादोऽपि न भवति। स्वयम् एभिः यादृशः अर्थः ज्ञापनीयः तादृशार्थः सहकारबलात् ज्ञाप्यते। अतः एतेषां नियमसूत्रत्वमपि न सम्भवति। अधिकारसूत्राणि च अतिदेशकार्यमपि न कुर्वन्ति। एतानि किञ्चित् धर्ममपि क्वचित् नारोपयन्ति। न वा सादृश्यग्रहः एभिः कार्यते, अपितु एते प्रक्रियानिर्वाहाय नूतनेन

नूतनेनार्थेन भिन्न-भिन्न-स्थलेषु एकवाक्यतां कृत्वा स्पष्टप्रक्रियापरिज्ञानं कारयन्ति। एवं प्रकारेण एतेषाम् अतिदेशत्वमपि नास्ति इति सुनिश्चितमेव।

अत: भिन्न: एव एक: प्रभेद: अङ्गीकृत: आचार्यै: अधिकार इति। तर्हि का अस्य प्रकृति: किञ्चास्य स्वरूपम्? इति जिज्ञासायाम् आचार्यै: तत्र तत्र उक्तं वर्तते। तद्यथा -

(1) **'अधिक्रियते उपरितनसूत्रजालशेषत्वेन पठ्यत इत्यधिकार:'**[1] इति। यथा- 'पूर्वत्रासिद्धम्'[2] इति। अस्य च उत्तरत्रानुवृत्त्या 'इदञ्च शास्त्रं पूर्वत्रासिद्धम्' इति वाक्यम् उत्तरत्र सूत्रेषु अर्थक्रमे समवलोक्यते।

(2) 'स्वदेशे लक्ष्यसंस्कारोपयोगि-विधिशास्त्रीयवाक्यार्थ-बोधोपकारक-वाक्यार्थाननुभावकत्वे सति विधिशास्त्रीय-लक्ष्यसंस्कारोपयोगि वाक्यार्थबोधप्रयोजकत्वम्'[3] इति।

(3) तृतीयं चास्य स्वरूपम् योगे योगे उपस्थितिरूपम्। यथोक्तं भाष्यकारेण- 'क: पुनरधिकारपरिभाषयोर्विशेष:।। **अधिकार: प्रतियोगं तस्यानिर्देशार्थ इति योगे योगे उपतिष्ठत**'[4] इति।

(4) **'स्वदेशे निराकाङ्क्षबोधजनक: सन्नुत्तरोत्तरसम्बन्धोऽधिकार:'**[5] इति।

(5) 'स्वदेशे लक्ष्योपयोगिबोधजनकत्वे सति विधिशास्त्रैकवाक्यतया लक्ष्योपयोगिबोधजनकत्वम्'[6] इति।

(6) 'अधिकार: **उत्तरत्रानुवृत्तिरूप: व्यापार:**'[7] इति।

(7) 'अधिकारो विनियोग:, विनियोगश्च प्रायेणोत्तरत्रोपस्थिति: क्वचित् पूर्वत्रापि'[8] इति।

**अधिकारशब्दार्थ:-**

वैयाकरणसमुदाये समादृताभ्यां बालमनोरमाकाशिकाभ्याम् अङ्गीकृत: अधिकारशब्दार्थ: तत्रादौ निरूप्यते।

**बालमनोरमा-**

बालमनोरमाकारानुसारम् अधिकारशब्दार्थ: भवति व्यापृति:। यथोक्तम्- 'अधिकार:

1. सि.कौ., बा.म., पूर्वत्रासिद्धम्
2. पा.सू. 8.2.1
3. परि. शे., भूतिटीका, पृ.-11
4. म.भा., आ.-2, पा.सू.2.1.11
5. सि.कौ., लक्ष्मी टी., अनुपसर्जनात् (पा.सू.4.1.14)
6. ल.श.शे., सुबोधिनी टी., सू.-पूर्वत्रासिद्धम्
7. सि.कौ., बा.म., स्वरितेनाधिकार:।
8. ल.श.शे., मू.- स्वरितेनाधिकार:।

व्यापृतिः"[1] इति। कार्ये संलग्नता इत्यर्थः, शब्दस्य उत्तरसूत्रे अनुवृत्तिः अत्र व्यापृतिशब्दार्थः भवति। तदुक्तम्- 'उत्तरसूत्रेप्यनुवृत्तिरेव व्यापृतिः'[2] इति।

**काशिका-**

काशिकाकारानुसारम् अधिकारो नाम विनियोगः। यथोक्तम्- 'अधिकारो विनियोगः'[3] इति।

**अधिकारसूत्राणां वर्गीकरणम्-**

अस्मिन्नंशे अधिकारसूत्राणाम् अष्टाध्यायीदृष्ट्या कौमुदीदृष्ट्या च वर्गीकरणं कृतं वर्तते। यतोहि अष्टाध्याय्यां सिद्धान्तकौमुद्यां च एतेषां क्रमभेदः भवति। अतः उभयत्र एतेषां स्थितेः परिज्ञानाय वर्गीकरणमिदं कृतम्।

**अष्टाध्यायीदृष्ट्या ( अष्टाध्याय्यां कस्मिन् अध्याये कति सूत्राणि )-**

भगवता पाणिनिना विरचिता अष्टाध्यायी अष्टसु अध्यायेषु विभक्ता वर्त्तते। प्रत्येकस्मिन् अध्याये चत्वारः पादाः सन्ति। चतुर्णां पादानां समवायः एव अध्यायो भवति। विविधेषु अध्यायेषु शब्दप्रक्रियायाः निर्वाहाय 3,978 सूत्राणि पृथक् पृथक् कृत्वा स्थापितानि सन्ति। एतानि सूत्राणि षोढा विभक्तानि। तानि हि संज्ञा-परिभाषा-विधि-नियमातिदेशाधिकारभेदेन ज्ञायन्ते। सर्वविधानि अपि सूत्राणि प्रत्यध्यायं दृश्यन्ते। यथा प्रथमाध्याये- संज्ञासूत्रं भवति **वृद्धिरादैच्**[4] इति, परिभाषासूत्रं भवति- **इको गुणवृद्धिः**[5], विधिसूत्रं भवति **तस्य लोपः**[6], नियमसूत्रं भवति **'पतिः समास एव'**[7], अतिदेशसूत्रं भवति- **आद्यन्तवदेकस्मिन्**[8], अधिकारसूत्रं भवति **आकडारादेकासंज्ञा**[9] इति। अन्यान्यपि बहूनि सूत्राणि प्रत्येकं कोटौ समापतन्ति।

एवमेव अधिकारसूत्राणि अपि प्रत्येकस्मिन् अध्याये तत्र तत्र प्रक्रियासंपोषणाय स्थापितानि सन्ति। तत्र आहत्य अष्टाध्याय्यां चतुःसप्ततिः (74) अधिकारसूत्राणि सन्ति। अध्यायक्रमेण तेषां विभागं पश्यामश्चेत् प्रथमाध्याये चत्वारि (4) अधिकारसूत्राणि सन्ति। तत्र प्रथमाध्यायस्य प्रथमद्वितीयतृतीयपादेषु अधिकारसूत्राणि न दृश्यन्ते। चतुर्थे पादे

1. सि.कौ., बा.म., सू.-46(स्वरितेनाधिकारः)
2. सि.कौ., बा.म., सू.-46(स्वरितेनाधिकारः)
3. का.वृ., सू.-1.3.11, स्वरितेनाधिकारः
4. पा.सू.1.1.1
5. पा.सू.1.1.3
6. पा.सू.1.3.9
7. पा.सू.1.4.8
8. पा.सू.1.1.21
9. पा.सू.1.4.1

सर्वाण्यपि चत्वारि सूत्राणि अवलोक्यन्ते। द्वितीयाध्याये नव (9) अधिकारसूत्राणि सम्प्राप्यन्ते। तत्र द्वितीयाध्यायस्य प्रथमपादे पञ्चसूत्राणि (5), द्वितीयपादे एकं सूत्रं (1), तृतीयपादे एकं सूत्रं (1), चतुर्थपादे सूत्रद्वयं (2) च सम्प्राप्यन्ते। एवं द्वितीयाध्याये आहत्य नव (5+1+1+2=9) अधिकारसूत्राणि भवन्ति। तृतीयाध्याये षोडशाधिकारसूत्राणि (16) अवलोक्यन्ते। तत्र तृतीयाध्यायस्य प्रथमपादे षट्सूत्राणि (6), द्वितीयपादे सूत्रद्वयम् (2), तृतीयपादे सप्तसूत्राणि (7), चतुर्थपादे चैकं (1) सूत्रं च लभ्यन्ते। एवम् आहत्य तृतीयाध्याये (6+2+7+1=16) षोडशसूत्राणि भवन्ति ।

चतुर्थाध्याये नवाधिकारसूत्राणि (9) सन्ति । तत्र प्रथमपादे षट्सूत्राणि (6), द्वितीयपादे एकं (1) सूत्रम्, तृतीयपादे अधिकारसूत्राणाम् अभावः, चतुर्थपादे च सूत्रद्वयं (2) प्राप्यते। एवं चतुर्थाध्याये आहत्य (6+1+0+2=9) नवाधिकारसूत्राणि प्राप्यन्ते। इतः परं पञ्चमाध्याये अष्टाधिकारसूत्राणि (8) समुपलभ्यन्ते। तत्र पञ्चमाध्यायस्य प्रथमपादे पञ्च (5) सूत्राणि, द्वितीयपादे अधिकारसूत्राभावः, तृतीयपादे सूत्रद्वयम् (2), चतुर्थपादे एकं (1) च सूत्रं सम्प्राप्यन्ते। एवम् आहत्य (5+0+2+1=8) पञ्चमाध्याये अष्टाधिकारसूत्राणि सन्ति । षष्ठाध्याये पञ्चदशाधिकारसूत्राणि(15) प्राप्यन्ते। तत्र प्रथमपादे पञ्चसूत्राणि (5), द्वितीयपादे चत्वारि (4) सूत्राणि, तृतीयपादे सूत्रद्वयम् (2), चतुर्थपादे चत्वारि सूत्राणि च भवन्ति। एवम् आहत्य (5+4+2+4=15) पञ्चदशाधिकारसूत्राणि सम्प्राप्यन्ते षष्ठाध्याये। अष्टाध्याय्याः सप्तमाध्याये त्रीणि अधिकारसूत्राणि दृश्यन्ते। तत्र प्रथमपादे अधिकारसूत्राणि न सन्त्येव। पादत्रये चैकमेकं सूत्रं भवति। अष्टमेऽध्याये च पुनः दशाधिकारसूत्राणि भवन्ति। प्रथमपादे चत्वारि (4), द्वितीयपादे त्रीणि (3), तृतीयपादे त्रीणि, चतुर्थपादे चाधिकारसूत्राभावः वर्त्तते। एवम् आहत्य अष्टमाध्याये (4+3+3+0=10) दशाधिकारसूत्राणि भवन्ति। तानि चाधिकारसूत्राणि अधोलिखितायां तालिकायां द्रष्टुं शक्यानि।

प्रत्यध्यायं सूत्रसंख्या

| अध्यायः | पादः | अधिकारसूत्रसंख्या (प्रतिपादम्) | अधिकारसूत्रसंख्या (प्रत्यध्यायम्) |
|---|---|---|---|
| (1)प्रथमाध्यायः | प्रथमः | 0 | 04 |
| | द्वितीयः | 0 | |
| | तृतीयः | 0 | |
| | चतुर्थः | 4 | |
| (2)द्वितीयाध्यायः | प्रथमः | 5 | 09 |
| | द्वितीयः | 1 | |
| | तृतीयः | 1 | |
| | चतुर्थः | 2 | |

| | | | |
|---|---|---|---|
| (3)तृतीयाध्याय: | प्रथम: | 6 | 16 |
| | द्वितीय: | 2 | |
| | तृतीय: | 7 | |
| | चतुर्थ: | 1 | |
| (4)चतुर्थाध्याय: | प्रथम: | 6 | 09 |
| | द्वितीय: | 1 | |
| | तृतीय: | 0 | |
| | चतुर्थ: | 2 | |
| (5)पञ्चमाध्याय: | प्रथम: | 5 | 08 |
| | द्वितीय: | 0 | |
| | तृतीय: | 2 | |
| | चतुर्थ: | 1 | |
| (6)षष्ठाध्याय: | प्रथम: | 5 | 15 |
| | द्वितीय: | 4 | |
| | तृतीय: | 2 | |
| | चतुर्थ: | 4 | |
| (7)सप्तमाध्याय: | प्रथम: | 0 | 03 |
| | द्वितीय: | 1 | |
| | तृतीय: | 1 | |
| | चतुर्थ: | 1 | |
| (8)अष्टमाध्याय: | प्रथम: | 4 | 10 |
| | द्वितीय: | 3 | |
| | तृतीय: | 3 | |
| | चतुर्थ: | 0 | |
| अष्टाध्याय्याम् अधिकारसूत्रसंख्या | | = 74 | |

अधोलिखितायां द्वितीयायां तालिकायां प्रत्यध्यायं पादानुगुणं सूत्राणाम् उल्लेख: क्रियते। तानि हि–

प्रत्यध्यायं सूत्राणि

| अध्याय: | पाद: | अधिकारसूत्रम् (प्रतिपादम्) |
|---|---|---|
| (1)प्रथमाध्याय: | प्रथम: | नास्ति |
| | द्वितीय: | नास्ति |

| | | |
|---|---|---|
| | तृतीयः | नास्ति |
| | चतुर्थः | 1) आकडारादेकासंज्ञा (1/4/1)<br>2) कारके (1/4/23)<br>3) प्राग्रीश्वरान्निपाताः (1/4/56)<br>4) कर्मप्रवचनीयाः (1/4/83) |
| (2)द्वितीयाध्यायः | प्रथमः | 1) प्राक्कडारात्समासः (2/1/3)<br>2) सह सुपा (2/1/4)<br>3) अव्ययीभावः (2/1/5)<br>4) विभाषा (2/1/11)<br>5) तत्पुरुषः (2/1/22) |
| | द्वितीयः | 1) शेषो बहुव्रीहिः (2/2/23) |
| | तृतीयः | 1) अनभिहिते (2/3/1) |
| | चतुर्थः | 1) तत्पुरुषोऽनञ्कर्मधारयः (2/4/19)<br>2) आर्धधातुके (2/4/35) |
| (3)तृतीयाध्यायः | प्रथमः | 1) प्रत्ययः (3/1/1)<br>2) परश्च (3/1/2)<br>3) आद्युदात्तश्च (3/1/3)<br>4) धातोरेकाचो हलादेः0 (3/1/22)<br>5) धातोः (3/1/91)<br>6) कृत्याः(3/1/95) |
| | द्वितीयः | 1) भूते (3/2/84)<br>2) आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु(3/2/134) |
| | तृतीयः | 1) भविष्यति गम्यादयः (3/3/3)<br>2) भावे (3/3/18)<br>3) अकर्तरि च कारके संज्ञायाम् (3/3/19)<br>4) स्त्रियां क्तिन् (3/3/94)<br>5) करणाधिकरणयोश्च (3/3/117)<br>6) भूते च (3/3/140)<br>7) वोताप्योः (3/3/141) |
| | चतुर्थः | 1) लस्य (3/4/77) |

| | | |
|---|---|---|
| (4)चतुर्थाध्यायः | प्रथमः | 1) ङ्याप्प्रातिपदिकात् (4/1/1)<br>2) स्त्रियाम् (4/1/3)<br>3) अनुपसर्जनात् (4/1/14)<br>4) तद्धिताः (4/1/76)<br>5) समर्थानां प्रथमाद्वा (4/1/82)<br>6) प्राग्दीव्यतो?ण् (4/1/83) |
| | द्वितीयः | 1) शेषे (4/2/92) |
| | तृतीयः | नास्ति |
| | चतुर्थः | 1) प्राग्वहतेष्ठक् (4/4/1)<br>2) प्राग्घिताद्यत् (4/4/75) |
| (5)पञ्चमाध्यायः | प्रथमः | 1) प्राक्क्रीताच्छः (5/1/1)<br>2) प्राग्वतेष्ठञ् (5/1/18)<br>3) आर्हादगोपुच्छसंख्यापरिणामाट्ठक् (5/1/19)<br>4) कालात् (5/1/78)<br>5) आ च त्वात् (5/1/120) |
| | द्वितीयः | नास्ति |
| | तृतीयः | 1) प्राग्दिशो विभक्तिः (5/3/1)<br>2) किं सर्वनामबहुभ्यो?द्वयादिभ्यः (5/3/2)<br>3) प्रागिवात्कः (5/3/70) |
| | चतुर्थः | 1) समासान्ताः (5/4/68) |
| (6) षष्ठाध्यायः | प्रथमः | 1) एकाचो द्वे प्रथमस्य (6/1/1)<br>2) अजादेर्द्वितीयस्य (6/1/2)<br>3) संहितायाम् (6/1/71)<br>4) एकः पूर्वपरयोः (6/1/83)<br>5) सुट्कात्पूर्वः (6/1/133) |
| | द्वितीयः | 1) आदिरुदात्तः (6/2/64)<br>2) अन्तः (6/2/92)<br>3) उत्तरपदादिः (6/2/111)<br>4) अन्तः (6/2/143) |
| | तृतीयः | 1) अलुगुत्तरपदे (6/3/1)<br>2) संहितायाम् (6/3/114) |
| | चतुर्थः | 1) अङ्गस्य (6/4/1)<br>2) असिद्धवदत्राभात् (6/4/22)<br>3) आर्धधातुके (6/4/46)<br>4) भस्य (6/4/129) |

| | | |
|---|---|---|
| | तृतीयः | नास्ति |
| | चतुर्थः | 1) आकडारादेकासंज्ञा (1/4/1)<br>2) कारके (1/4/23)<br>3) प्राग्रीश्वरान्निपाताः (1/4/56)<br>4) कर्मप्रवचनीयाः (1/4/83) |
| (2)द्वितीयाध्यायः | प्रथमः | 1) प्राक्कडारात्समासः (2/1/3)<br>2) सह सुपा (2/1/4)<br>3) अव्ययीभावः (2/1/5)<br>4) विभाषा (2/1/11)<br>5) तत्पुरुषः (2/1/22) |
| | द्वितीयः | 1) शेषो बहुव्रीहिः (2/2/23) |
| | तृतीयः | 1) अनभिहिते (2/3/1) |
| | चतुर्थः | 1) तत्पुरुषोऽनञ्कर्मधारयः (2/4/19)<br>2) आर्धधातुके (2/4/35) |
| (3)तृतीयाध्यायः | प्रथमः | 1) प्रत्ययः (3/1/1)<br>2) परश्च (3/1/2)<br>3) आद्युदात्तश्च (3/1/3)<br>4) धातोरेकाचो हलादेः0 (3/1/22)<br>5) धातोः (3/1/91)<br>6) कृत्याः(3/1/95) |
| | द्वितीयः | 1) भूते (3/2/84)<br>2) आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु(3/2/134) |
| | तृतीयः | 1) भविष्यति गम्यादयः (3/3/3)<br>2) भावे (3/3/18)<br>3) अकर्तरि च कारके संज्ञायाम् (3/3/19)<br>4) स्त्रियां क्तिन् (3/3/94)<br>5) करणाधिकरणयोश्च (3/3/117)<br>6) भूते च (3/3/140)<br>7) वोताप्योः (3/3/141) |
| | चतुर्थः | 1) लस्य (3/4/77) |

| | | |
|---|---|---|
| (4) चतुर्थाध्याय: | प्रथम: | 1) ङ्याप्प्रातिपदिकात् (4/1/1)<br>2) स्त्रियाम् (4/1/3)<br>3) अनुपसर्जनात् (4/1/14)<br>4) तद्धिता: (4/1/76)<br>5) समर्थानां प्रथमाद्वा (4/1/82)<br>6) प्राग्दीव्यतो?ण् (4/1/83) |
| | द्वितीय: | 1) शेषे (4/2/92) |
| | तृतीय: | नास्ति |
| | चतुर्थ: | 1) प्राग्वहतेष्ठक् (4/4/1)<br>2) प्राग्घिताद्यत् (4/4/75) |
| (5) पञ्चमाध्याय: | प्रथम: | 1) प्राक्क्रीताच्छ: (5/1/1)<br>2) प्राग्वतेष्ठञ् (5/1/18)<br>3) आर्हादगोपुच्छसंख्यापरिणामाट्ठक् (5/1/19)<br>4) कालात् (5/1/78)<br>5) आ च त्वात् (5/1/120) |
| | द्वितीय: | नास्ति |
| | तृतीय: | 1) प्राग्दिशो विभक्ति: (5/3/1)<br>2) किं सर्वनामबहुभ्यो?द्वयादिभ्य: (5/3/2)<br>3) प्रागिवात्क: (5/3/70) |
| | चतुर्थ: | 1) समासान्ता: (5/4/68) |
| (6) षष्ठाध्याय: | प्रथम: | 1) एकाचो द्वे प्रथमस्य (6/1/1)<br>2) अजादेर्द्वितीयस्य (6/1/2)<br>3) संहितायाम् (6/1/71)<br>4) एक: पूर्वपरयो: (6/1/83)<br>5) सुट्कात्पूर्व: (6/1/133) |
| | द्वितीय: | 1) आदिरुदात्त: (6/2/64)<br>2) अन्त: (6/2/92)<br>3) उत्तरपदादि: (6/2/111)<br>4) अन्त: (6/2/143) |
| | तृतीय: | 1) अलुगुत्तरपदे (6/3/1)<br>2) संहितायाम् (6/3/114) |
| | चतुर्थ: | 1) अङ्गस्य (6/4/1)<br>2) असिद्धवदत्राभात् (6/4/22)<br>3) आर्धधातुके (6/4/46)<br>4) भस्य (6/4/129) |

| | | |
|---|---|---|
| (7) सप्तमाध्यायः | प्रथमः | नास्ति |
| | द्वितीयः | 1) मपर्यन्तस्य (7/2/91) |
| | तृतीयः | 1) उत्तरपदस्य (7/3/10) |
| | चतुर्थः | 1) अत्र लोपोऽभ्यासस्य (7/4/58) |
| (8) अष्टमाध्यायः | प्रथमः | 1) सर्वस्य द्वे (8/1/1)<br>2) पदस्य (8/1/16)<br>3) पदात् (8/1/17)<br>4) अनुदात्तं सर्वमपदादौ (8/1/18) |
| | द्वितीयः | 1) पूर्वत्रासिद्धम् (8/2/1)<br>2) वाक्यस्य टेः प्लुत उदात्तः (8/2/82)<br>3) तयोर्य्वावचि संहितायाम् (8/2/108) |
| | तृतीयः | 1) अत्रानुनासिकः पूर्वस्य तु वा (8/3/2)<br>2) अपदान्तस्य मूर्धन्यः (8/3/35)<br>3) इण्कोः (8/3/57) |
| | चतुर्थः | नास्ति |

**कौमुदीदृष्ट्या अधिकारसूत्रवर्गीकरणम्-**

अधिकारसूत्राणां विषयदृष्ट्या विभागः अधोलिखितासु तालिकासु द्रष्टुं शक्यते।

(विषयदृष्ट्या अधिकारसूत्रविभागः)

**संज्ञाप्रकरणे अधिकारसूत्राणि-**

| सूत्रम् | प्रकरणम् | कौमुदीसंख्या | अष्टाध्यायीसंख्या |
|---|---|---|---|
| 1. पूर्वत्रासिद्धम् | संज्ञाप्रकरणम् | 12 | 8/2/1 |
| 2. प्राग्रीश्वरान्निपाताः | संज्ञाप्रकरणम् | 19 | 1/4/56 |

**परिभाषाप्रकरणे अधिकारसूत्राणि-**

अधिकारसूत्राणि न सन्ति।

**सन्धिप्रकरणे अधिकारसूत्राणि-**

| सूत्रम् | प्रकरणम् | कौमुदीसंख्या | अष्टाध्यायीसंख्या |
|---|---|---|---|
| 1. एकः पूर्वपरयोः | अच्सन्धिः | 68 | 6/1/83 |
| 2. वाक्यस्य टेः प्लुत उदात्तः | प्रकृतिभावः | 93 | 8/2/82 |
| 3. अत्रानुनासिकः पूर्वस्य तु वा | हल्सन्धिः | 136 | 8/3/2 |
| 4. संहितायाम् | हल्सन्धिः | 145 | 6/1/71 |

## सुबन्तप्रकरणे अधिकारसूत्राणि-

| सूत्रम् | प्रकरणम् | कौमुदीसंख्या | अष्टाध्यायीसंख्या |
|---|---|---|---|
| 1. प्रत्ययः | अजन्तपुल्लिङ्गम् | 180 | 3/1/1 |
| 2. परश्च | अजन्तपुल्लिङ्गम् | 181 | 3/1/2 |
| 3. ङ्याप्प्रातिपदिकात् | अजन्तपुल्लिङ्गम् | 182 | 3/1/3 |
| 4. अङ्गस्य | अजन्तपुल्लिङ्गम् | 200 | 6/4/1 |
| 5. अपदान्तस्य मूर्धन्यः | अजन्तपुल्लिङ्गम् | 210 | 8/3/55 |
| 6. इण्कोः | अजन्तपुल्लिङ्गम् | 211 | 8/3/57 |
| 7. आकाडारादेका संज्ञा | अजन्तपुल्लिङ्गम् | 232 | 1/4/1 |
| 8. भस्य | अजन्तपुल्लिङ्गम् | 233 | 6/4/129 |
| 9. मपर्यन्तस्य | हलन्तपुल्लिङ्गम् | 383 | 7/2/91 |
| 10. पदस्य | हलन्तपुल्लिङ्गम् | 401 | 8/1/16 |
| 11. पदात् | हलन्तपुल्लिङ्गम् | 402 | 8/1/17 |
| 12. अनुदात्तं सर्वमपादादौ | हलन्तपुल्लिङ्गम् | 403 | 8/1/18 |
| 13. स्त्रियाम् | स्त्रीप्रत्ययप्रकरणम् | 453 | 4/1/3 |
| 14. अनुपसर्जनात् | स्त्रीप्रत्ययप्रकरणम् | 453 | 4/1/14 |
| 15. कारके | कारकप्रकरणम् | 534 | 1/4/23 |
| 16. अनभिहिते | कारकप्रकरणम् | 536 | 2/3/1 |
| 17. कर्मप्रवचनीयाः | कारकप्रकरणम् | 546 | 1/4/83 |

## समासप्रकरणे अधिकारसूत्राणि-

| सूत्रम् | प्रकरणम् | कौमुदी-सं. | अष्टा.-सं. |
|---|---|---|---|
| 1. प्राक्कडारात्समासः | अव्ययीभावप्रकरणम् | 648 | 2/1/3 |
| 2. सह सुपा | अव्ययीभावप्रकरणम् | 649 | 2/1/4 |
| 3. अव्ययीभावः | अव्ययीभावप्रकरणम् | 651 | 2/1/5 |
| 4. विभाषा | अव्ययीभावप्रकरणम् | 665 | 2/1/11 |
| 5. समासान्ताः | अव्ययीभावप्रकरणम् | 676 | 5/4/68 |
| 6. तत्पुरुषः | तत्पुरुषसमासप्रकरणम् | 684 | 2/1/22 |
| 7. तत्पुरुषोऽनञ्कर्मधारयः | तत्पुरुषसमासप्रकरणम् | 822 | 2/4/19 |
| 8. शेषो बहुव्रीहिः | बहुव्रीहिप्रकरणम् | 829 | 2/2/23 |
| 9. अलुगुत्तरपदे | अलुक्समासप्रकरणम् | 958 | 6/3/1 |
| 10. संहितायाम् | समासाश्रयविधिप्रकरणम् | 1035 | 6/3/114 |

## तद्धितप्रकरणे अधिकारसूत्राणि-

| सूत्रम् | प्रकरणम् | कौ.-सं. | अष्टा.-सं. |
|---|---|---|---|
| 1. समर्थानां प्रथमाद्वा | अपत्याधिकारप्रकरणम् | 1072 | 4/1/82 |
| 2. प्राग्दीव्यतोऽण् | अपत्याधिकारप्रकरणम् | 1073 | 4/1/83 |
| 3. शेषे | शैषिकप्रकरणम् | 1312 | 4/2/92 |
| 4. उत्तरपदस्य | शैषिकप्रकरणम् | 1396 | 7/3/10 |
| 5. प्राग्वहतेष्ठक् | प्राग्वहतीयप्रकरणम् | 1548 | 4/4/1 |
| 6. प्राग्घिताद्यत् | प्राग्घितीयप्रकरणम् | 1626 | 4/4/75 |
| 7. प्राक् क्रीताच्छः | छयद्विधिप्रकरणम् | 1661 | 5/1/11 |
| 8. प्राग्वहतेष्ठञ् | तद्धितार्हीयप्रकरणम् | 1680 | 5/1/18 |
| 9. आर्हादगोपुच्छसङ्ख्या० | तद्धितार्हीयप्रकरणम् | 1681 | 5/1/19 |
| 10. कालात् | कालाधिकारप्रकरणम् | 1742 | 5/1/78 |
| 11. आ च त्वात् | नञ्स्नञधिकारः | 1782 | 5/1/120 |
| 12. किं सर्वनामबहुभ्यो० | प्राग्दिशीयप्रकरणम् | 1948 | 5/3/2 |
| 13. प्रागिवात्कः | प्रागिवीयप्रकरणम् | 2025 | 5/3/70 |
| 14. सर्वस्य द्वे | द्विरुक्तप्रकरणम् | 2139 | 8/1/1 |

## तिङन्तप्रकरणे अधिकारसूत्राणि-

| सूत्रम् | प्रकरणम् | कौ.-सं. | अष्टा.-सं. |
|---|---|---|---|
| 1. लस्य | भ्वादिप्रकरणम् | 2153 | 3/4/77 |
| 2. एकाचो द्वे प्रथमस्य | भ्वादिप्रकरणम् | 2175 | 6/1/1 |
| 3. अजादेर्द्वितीयस्य | भ्वादिप्रकरणम् | 2176 | 6/1/2 |
| 4. असिद्धवदत्राभात् | भ्वादिप्रकरणम् | 2183 | 6/9/22 |
| 5. आर्धधातुके | भ्वादिप्रकरणम् | 2307 | 6/4/46 |
| 6. आर्धधातुके | भ्वादिप्रकरणम् | 2432 | 2/4/35 |
| 7. सुट्कात्पूर्वः | तनादिप्रकरणम् | 2553 | 6/1/135 |

## प्रक्रियाप्रकरणे अधिकारसूत्राणि-

| सूत्रम् | प्रकरणम् | कौ.-सं. | अष्टा.-सं. |
|---|---|---|---|
| 1. अत्र लोपोऽभ्यासस्य | सन्नन्तप्रक्रिया | 2620 | 7/4/58 |
| 2. धातोरेकाचो० | यङन्तप्रक्रिया | 2629 | 3/1/22 |
| 3. भूते च | लकारार्थप्रक्रिया | 2797 | 3/3/140 |
| 4. वोताप्योः | लकारार्थप्रक्रिया | 2798 | 3/3/41 |

**कृदन्तप्रकरणे अधिकारसूत्राणि-**

| सूत्रम् | प्रकरणम् | कौ.-सं. | अष्टा.-सं. |
|---|---|---|---|
| 1. धातोः | पू.कृ.कृत्यप्रकरणम् | 2829 | 3/1/91 |
| 2. कृत्याः | पू.कृ.कृत्यप्रकरणम् | 2831 | 3/1/95 |
| 3. भूते | कृदन्तप्रकरणम् | 2995 | 3/2/84 |
| 4. आक्वेस्तच्छीलतद्धर्मः | कृदन्तप्रकरणम् | 3114 | 3/2/134 |
| 5. भविष्यति गम्यादयः | उत्तरकृदन्तम् | 3171 | 3/3/3 |
| 6. भावे | उत्तरकृदन्तम् | 3184 | 3/3/18 |
| 7. अकर्तरि च कारके संज्ञायां | उत्तरकृदन्तम् | 3188 | 3/3/19 |
| 8. स्त्रियां क्तिन् | उत्तरकृदन्तम् | 3272 | 3/3/94 |
| 9. करणाधिकरणयोश्च | उत्तरकृदन्तम् | 3293 | 3/3/117 |

**वैदिकप्रकरणे अधिकारसूत्राणि-**

| सूत्रम् | प्रकरणम् | कौ.-सं. | अष्टा.-सं. |
|---|---|---|---|
| 1. तयोर्य्वावचि संहितायाम् | वैदिकी प्रक्रिया | 3627 | 8/2/108 |

**स्वरप्रकरणे अधिकारसूत्राणि-**

| सूत्रम् | प्रकरणम् | कौ.-सं. | अष्टा.-सं. |
|---|---|---|---|
| 1. आद्युदात्तश्च | स्वरप्रकरणशेषाः | 3708 | 3/1/3 |
| 2. आदिरुदात्तः | स्वरप्रकरणशेषाः | 3798 | 6/2/64 |
| 3. अन्तः | स्वरप्रकरणशेषाः | 3826 | 6/2/92 |
| 4. उत्तरपदादिः | स्वरप्रकरणशेषाः | 3845 | 6/2/111 |
| 5. अन्तः | स्वरप्रकरणशेषाः | 3877 | 6/2/143 |

प्रतिप्रकरणं सूत्रविभागेन अस्माभिर्ज्ञायते यत् परिभाषाप्रकरणं विहाय अन्येषु सर्वेषु प्रकरणेषु अधिकारसूत्राणि संप्राप्यन्ते। परिभाषाप्रकरणे प्रायः अधिकारसूत्राणां स्थितिः एतदर्थं नास्ति यतः तत्र परिभाषासूत्राणामेव संकलनं वर्तते। महाभाष्यानुसारं तु सम्पूर्णं परिभाषाप्रकरणम् अधिकारप्रकरणत्वेन व्यवहर्तुं शक्यम्। यतोहि परिभाषापि अधिकारप्रकारेषु अन्यतमः प्रकारः स्वीकृतः वर्त्तते। किन्तु परिभाषारूपः अधिकारः शोधस्यास्य विषयः नास्तीत्यतः तेषां परिगणनं नास्ति।

**प्रतिप्रकरणम् अधिकारसूत्राणां संख्या एवं वर्त्तते -**

1. संज्ञाप्रकरणम्- अधिकारसूत्रद्वयम् (2)
2. परिभाषाप्रकरणम्- नास्ति (0)

3. सन्धिप्रकरणम्- सूत्रचतुष्टयम् (4)
4. सुबन्तप्रकरणम्- सप्तदशाधिकारसूत्राणि (17)
5. समासप्रकरणम्- दशाधिकारसूत्राणि (10)
6. तद्धितप्रकरणम्- चतुर्दशाधिकारसूत्राणि (14)
7. तिङन्तप्रकरणे- सप्ताधिकारसूत्राणि (7)
8. प्रक्रियाप्रकरणे- सूत्रचतुष्टयम् (4)
9. कृदन्तप्रकरणे- नवाधिकारसूत्राणि (9)
10. वैदिकीप्रकरणे- एकं सूत्रम् (1)
11. स्वरप्रकरणे च- पञ्चाधिकारसूत्राणि (5)

एवम् आहत्य 2+0+4+17+10+14+7+4+9+1+5=74 अधिकारसूत्राणि भवन्ति। सर्वाधिकाधिकारसूत्राणि सुबन्तप्रकरणे सन्ति इति ज्ञायते।

## सन्दर्भग्रन्थसूचिः


| क्र.सं. | पुस्तकस्य नाम | लेखकः/सम्पादकः | प्रकाशकः | प्रकाशन-वर्षम् |
|---|---|---|---|---|
| 1 | अष्टाध्यायीसूत्रपाठः | महर्षिपाणिनिः | निर्णय सागर प्रेस, बम्बई | 1970 |
| 2 | अष्टाध्यायीसूत्रपाठः | महर्षिपाणिनिः/ ब्रह्मदत्तजिज्ञासुः | रामलाल-कपूर-ट्रस्ट सोनीपत, हरियाणा | वि.सं.-2050 |
| 3 | अष्टाध्यायीसूत्रपाठः | दीक्षितपुष्पा | संस्कृतभारती, नवदेहली | 2010 |
| 4 | उत्सर्गापवादमीमांसा | प्रो0 लक्ष्मी शर्मा | लिट्रेरी सर्किल, जयपुरम् | 2013 |
| 5 | काशिका(न्यासपदमञ्जरी -भावबोधिनी- सहिता) (खण्डः- 1-10) | श्रीमद्वामन-जयादित्यौ/ जयशंकरलालत्रिपाठि-सुधाकरमालवीयौ | तारा-बुक-एजेन्सी, वाराणसी | 2009 |
| 6 | काशिकावृत्तिः(न्यास-पदमञ्जरी-व्याख्यया च सहिता), (खण्डः-1-6) | श्रीमद्वामनजयादित्यौ/ स्वामी द्वारिकादासः शास्त्री; पं. श्रीकालिका प्रसादशुक्लः | सुधीप्रकाशन, वाराणसी | 1983 |
| 7 | सिद्धान्तकौमुदी (तत्त्वबोधिनी) | श्रीभट्टोजिदीक्षितः | श्रीलालबहादुरशास्त्रि-राष्ट्रियसंस्कृत-विद्यापीठम्, नवदेहली | 2009 |
| 8 | सिद्धान्तकौमुदी 'बालमनोरमा'-व्याख्यासमलङ्कृता (खण्डः1-4) | श्रीभट्टोजिदीक्षितः | चौखम्बा-सुरभारती-प्रकाशन, वाराणसी | 1998 |

UGC - CARE Listed
अप्रैल-जून, 2021

शोधप्रभा
वर्ष : 46, द्वितीयोऽङ्कः

# कौटिल्यस्य राजचिन्तनं लोकतंत्रे एतस्य प्रासंगिकता च

डॉ. विजयगर्गः *

मानवः सामाजिकप्राणी अस्ति । मानवः समाजश्च परस्परं पूरकौ भवतः। मानवं विना समाजस्य निर्माणं भवितुं न अर्हति। कस्यापि समाजस्य कृते नृपस्य आवश्यकता किमर्थं भवति? किं समाजे जनाः पारस्परिकसौहार्देन सौमनस्येन च विना स्थातुं न शक्नुवन्ति? जन आत्मनः नियन्त्रणार्थमन्यं जनं किमर्थमपेक्षते। यदि वयं समाजस्य विकासक्रमं पश्यामः तर्हि इदमवलोकयामः यत् आदिकालत एव मानवः सिंह-व्याघ्रादिभ्यः पशुभ्यः स्वरक्षार्थं समूहे निवासं कर्तुमारभत। एवं कल्पयितुं शक्यते यत् परस्पर-व्यवहारार्थं, एकरूपतार्थं, समरसतासद्भावनार्थं च मानवाः काञ्चन नियमान् कानिचन विधानानि च पालयामासुः। य एतान् नियमान् न अपालयत् तस्य कृते दण्डविधानमभवत्। तस्य बहिष्करणार्थं विधानमप्यभवत्। यदि दण्डस्य विधानं न भवेत् तदा सबलः निर्बलं नाशयेत् सामाजिकबन्धश्च नष्टः स्यात्। अत्र प्रश्नः भवति एतादृशैः सबलैः जनैः समाजस्य नियमान् पालयितुं कः समर्थः स्यात्? नूनं नृप एव तथा समर्थः भवति इत्यस्योत्तरम्। समाजस्य यथायथं सन्तुलनार्थं राजा आवश्यको वर्तते। समाजोऽस्ति चेत् नियमाः भवन्ति एव, नियमेभ्यः राजा भवति यः एतेषां नियमानामुत्तरदायित्वं निर्वहति। राज्ञि दत्तावधाने प्रजाः प्रसन्नाः शांताश्च भवेयुः।

कौटिल्योऽर्थशास्त्रे राज्ञ आवश्यकतायाः विषये लिखति-

**मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे।**[1]

वारिधौ बृहन्मत्स्यः लघुं मत्स्यं भक्षयति, अयमेव मत्स्यन्यायः वर्तते। एतेन न्यायेन कश्चन बुद्धिमान् बलवान् वा अबुद्धिमन्तं निर्बलं वा पीडयेत्। एतादृशेनात्याचारेण समाजे भयस्य वातावरणं सृष्टं भवति। बलवान् जनः कर्तव्याकर्तव्यविषये न विचारयति, येन केन प्रकारेण स स्वार्थमेव साधयितुं यतते। एवं समाजस्य कल्याणस्वरूपं विनश्यति। तस्मात् समाजे जनाः विचारयामासुः एतादृश्याः स्थितेः अपनयनार्थं योग्यः कोऽपि जनो राजा भवेत् यः प्रजायाः रक्षायाः कल्याणस्य च भारं निर्वहेत्। एवं प्रजाः विवस्वतः पुत्रं मनुं

---

* सह-आचार्यः, हिन्दू-महाविद्यालयः, दिल्ली-विश्वविद्यालयः, दिल्ली-110007

1. अर्थशास्त्रम्, 1/13/6

राजानं चक्रुः। मनुस्मृतिः वदति-

**अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात्।**
**रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः? मनुस्मृति।। 7/3**

अयमभिप्रायः- अस्मिन् अराजके जगति प्रजाः भयात् इतस्ततः धावन्त्यः बभूवुः तदा प्रजायाः रक्षार्थम् ईश्वरः राजानमसृजत्।

महाभारतस्य शान्तिपर्वणि राज्ञः राज्यस्य चोत्पत्तिविषयकं वर्णनं प्राप्यते। कृतयुगे यदा राजा न आसीत् राज्यमपि नासीत् तदा न दण्ड आसीत् न वा दाण्डिकः। तदा जनाः धर्माचरणेनैव पालिताः पोषिताः च बभूवुः। धर्मस्य भयादेव प्रजाः स्वकर्तव्यस्य पालनं विदधत्यः परस्परस्य रक्षामकुर्वन्। शनैः शनैः जनाः धर्माचरणे कष्टमनुभवितुं आरभन्तः अत च ते मोहावृताः अभवन्। मोहस्य कारणात् करणीयं किमकरणीयं किमति जनाः न अजानन तस्मात् कारणात् धर्मस्य नाशोऽभवत्। जनाः स्वकीयं यन्नासीत् तदपि यथाकथञ्चित् प्राप्तं स्यादित्येवं प्रयासं कर्तुमारभन्त। तेन सर्वत्र भयमयं वातावरणं व्याप्तमभवत्। वेदज्ञानस्य धर्मस्य च लोपभयात् देवाः ब्रह्मणः शरणमगच्छन् यो नीतिशास्त्रमरचयत्।

**न वै राज्यं न राजासीन्न दण्डो न दाण्डिकः।**
**धर्मेणैव प्रजाः सर्वाः रक्षंतिस्म परस्परम्।।**
**विलुप्ते नरलोके वै ब्रह्मचैव ननाश ह ।**
**नाशाच्च ब्रह्मणो राजन् धर्मो नाशमथागमत्।**
**नष्टे ब्रह्मणि धर्मे च देवांस्त्रासः समाविशत्।**
**ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः।।**

महाभारत शांतिपर्व, 59/12-22

नृपः विपत्तिभ्यो विपत्कारिभ्यश्च प्रजाः रक्षति। स हि लोककल्याणार्थं कार्याणि कृत्वा प्रजाः सुखयति। राजा लोकरञ्जनार्थं सदैव तत्परो भवेदिति भवभूतेरभिप्रायः। स कविः उत्तररामचरिते श्रीरामचन्द्रस्य मुखात् वदति-

**स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।**
**आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा।।** उत्तररामचरितम्, 1/12

राज्ञि देवानामंशो भवतीति शास्त्रेषु वर्णितमस्ति। ऋग्वेदे[1], यजुर्वेदे[2], ब्राह्मणग्रन्थेषु[3],

1. अहं राजा वरुणो मह्यं तान्यसूर्याणि प्रथमा धारयन्त........ अहं इन्द्रो वरुणस्ते महित्वोर्वी गभीरे रजसी सुमेके.....विद्वान्त्समैरयं रोदसी धारयं च। ऋग्वेदः, 4,42,2-3
2. इन्द्रश्च सम्राट् वरुणश्च राजा तौ ते भक्षं चक्रतुरग्रऽएतम् । यजुर्वेदः, 8/37
3. प्रजापतिरिन्द्रसृजतानुजावरं देवानाम्....एतेषां देवानामधिपतिरेधीति....... ततो वा इन्द्रो देवानामधिपतिरभवत्। तैत्तिरीयब्राह्मणः, 2/2/10/1-2

पुराणेषु[1] एवंविधाः उल्लेखाः यत्र तत्र प्राप्यन्ते। नृपे इन्द्र-वरुण-सोम-सूर्यप्रभृतीनां देवानामंशः भवति तस्मात् राजा देवो भवति इति अथर्ववेदः[2]। तं साधारणं मत्वा न अवमन्येत । ईश्वरः पृथ्वीतलस्य मानवानां रक्षार्थं राजानमसृजत्। ईश्वरः इन्द्रवायुयमसूर्याग्निचन्द्रकुबेरादीनां देवानां शाश्वतान् अवयवान् स्वीकृत्य नृपमरचयत्-

**इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।**
**चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः।।** मनुस्मृतिः, 7/4

अयं नृपः यथासमयं स्वप्रभावेण अग्निवत् वायुवत् यमवत् सूर्यवत् कुबेरवत् च भवति।

**सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट्।**
**स कुबेरः स वरुणः स चेन्द्रः स्वप्रभावतः।।** मनुस्मृति, 7/7

राजा यथादृशीमावश्यकतामनुभवति तदनुरूपो देवो भूत्वा स प्रजाभ्यो समाचरति। अग्निः भूत्वा दुष्टेभ्यो दण्डं प्रयच्छति, वायुर्भूत्वा स्वगुप्तचरैः प्रजासु प्रविष्टः भवति, सूर्यसमो भूत्वा प्रजाभ्यः करग्रहणं करोति, चन्द्रसमो भूत्वा प्रजा आनन्दयति। प्रजा. कल्याणे स इन्द्रवत् कल्याणरूपः भवति। एष सर्वदा देवसममाचरति अत एव राजा सर्वदा पूजनीयो भवति। आचार्यः चाणक्योऽपि राज्ञि विद्यमानानेतान् विशिष्टान् गुणान् वर्णयति-

**इन्द्रयमस्थानमेतद्राजानः प्रत्यक्षहेड्प्रसादाः।**
**तानवमन्यमानान दैवोऽपि दण्डः स्पृशति।।** अर्थशास्त्रम्, 13/10-11

राजा प्रत्यक्षमेव प्रजानां बन्धनिग्रहादीन् करोति तास्वनुग्रहञ्च करोति । तस्मात् स इन्द्रसमो यमसमश्च भवति। यदि कश्चित् तस्य अवमानं करोति तर्हि तस्मिन् दैवीयाः विपदः अवश्यमापतन्ति। अत एव नृपस्य कदापि अवमानः न कर्तव्यः। रघुवंशे महाकविः कालिदासोऽपि राजानं दिलीपं वर्णयन् ब्रवीति यद् स दुष्टेभ्यः भयंकरो गुणिभ्यश्च सुखंकर आसीत्।[3]

अनया शास्त्रविवेचनया ईश्वरः राजानमरचयदिति स्पष्टतरम्। तस्मिन् देवानां दिव्यांशाः भवन्ति। नृपस्य पार्श्वे सा शक्तिरस्ति यया स प्रजाः साधयति। सेयं शक्तिः राजदण्डरूपा

---

1. ब्रह्मा जनार्दनः शम्भुरिन्द्रो वायुर्यमो रविः.... नृपस्यैते शरीरस्थाः सर्वदेवमयो नृपः। विष्णुपुराण, 1/13/21-22
2. इन्द्रस्यौज स्थेन्द्रस्य सह स्थेन्द्रस्य बलं स्थेन्द्रस्य वीर्यं स्थेन्द्रस्य नृम्णं स्थाजिष्णवे योगाय विश्वानि मा भुतान्युप तिष्ठन्तु युक्ता मे आप स्थ?....... प्रजापतेर्वो धाम्नाऽस्मै लोकाय सादये । अथर्ववेदः, 10/5/6-7
3. भीमकान्तैर्नृपगुणै स बभूवोपजीविनाम्। अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः? काव्य-संचयनम्, पृ. 75

वर्तते। दण्ड एव सा शक्तिः या राजानं बलयुक्तं करोति। राजा दण्डेनैव प्रजानां नियमनं करोति। दुष्टानां दुराचाराणां च दमनार्थं दण्डस्योत्पत्तिरभवत्। काम-क्रोध-लोभ-मोह-मद-मात्सर्यादि-अरिषड्वर्गः मनुष्यमनीतिं प्रति अधर्मं प्रति नयति इति आचार्यचाणक्यः[1]। एतादृशानां दुष्टानां दमनाय लोककल्याणाय च दण्डोऽत्यावश्यकः वर्तते। दण्ड एव प्रजाः नियन्त्रयति, दण्ड एव रक्षति। जगति सुप्ते दण्ड एव जागरति अत एव विद्वांसः दण्डमेव धर्मं वदन्ति[2]। दण्डस्य भयात् जनाः अनैतिककार्येभ्यः निवर्तन्ते। दण्डस्य यथायथं प्रयोगः प्रजाः धर्मार्थकामेषु प्रवर्तयति। एवं दण्डः त्रिवर्गस्य रक्षकोऽपि भवति[3]। मनुः दण्डमेव नृपं मन्यते[4]। दण्डं विना राजा तादृशं शरीरं भवति यस्मिन् प्राणाः नैव सन्ति। चाणक्यस्य मतौ अपराधानुसारं दण्डस्य प्रयोगः करणीयः। यादृशोऽपराधः तादृश एव दण्डो दातव्यः। अपराधस्य परिमाणादधिके दण्डे प्रदत्ते प्रजाः रुष्टाः खिन्नाः च भवन्ति न्यूनात् च दण्डात् प्रजाः नृपात् न बिभ्यति। महाकविः भारविरपि प्रकारान्तरेण एतस्य एव समर्थनं करोति-

**अबन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः।**
**अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः।।**[5]

आचार्यस्य चाणक्यस्येदं दण्डविधानं सर्वेषु कालेषु सर्वेषु देशेषु प्रासंगिकमस्ति। आधुनिकभारतीयसमाजे भारतीयलोकतन्त्रेऽपि कौटिल्यस्य नीतिशास्त्रं नितांतं प्रासंगिकमस्ति। नीतिनिर्धारकैः भारतीयसंविधाने प्राचीन-नीतिशास्त्राणां नीतीनामुपयुक्ततरः समावेशः कृतोऽस्ति। पुरा भारते राजतन्त्रमासीदिदानीं प्रजातन्त्रमस्ति। अत्र प्रजाः स्वनेतारं स्वयं चिन्वन्ति। यदि देशे राजा राजदण्डः च न भवेतां तदा समाजे अनैतिकानि कार्याणि प्रचलेयुः। भवन्ति नाम अद्यापि समाजेऽनैतिककार्याणि। परमेतानि कार्याणि मानवस्वभावदौर्बल्याद् क्षणिकावेशस्य अकस्माज्जन्यस्य कारणादेव भवन्ति येषां परिणामः दुःखात्मको भवति। यदि दण्डस्य भयं न भवेत् तर्हि समाजे एतादृशानि गर्हितानि कार्याणि सामान्यरूपेण प्रचलितानि भवेयुः। भारतस्य प्रजाः भारतीयदण्डसंहितायाम् अत्रत्य न्यायालयपद्धतौ दृढं विश्वसन्ति। कस्मिंश्चिदपि दुष्कृते घटिते जनाः न्यायालयमेव गच्छन्ति। प्रभावपूर्णया दण्डव्यवस्थया जनाः रात्रौ निसंश्याः संत सुखं शेरते। तदेवमिहागतं यत् कौटिल्यस्य राजचिन्तनं न केवलं भारतदेशस्य कृते प्रासंगिकमस्ति परं समग्रस्य विश्वस्य कृते प्रासंगिकमस्ति।

---

1. कामक्रोधलोभमानमदहर्षत्यागात्कार्यः। अर्थशास्त्रम्, 1/6/1 शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः। अम्बरीषश्च नाभागो बुभुजाते चिरं महीम्।। अर्थशास्त्रम्, 1/6/15
2. दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति। दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः।। मनुस्मृतिः, 7/18
3. सुविज्ञातप्रणीतो हि दण्डः प्रजाधर्मार्थकामैर्योजयति। अर्थशास्त्रम्, 1/4/14
4. स राजा पुरुषो दण्डः स नेता शासिता च सः। मनुस्मृतिः, 7/17
5. किरातार्जुनीयम्, 1/33

**संदर्भग्रन्थाः**

1. अर्थशास्त्रम्, वाचस्पतिगैरोला, चौखम्बाविद्याभवनम्, वाराणसी, 1962
2. मनुस्मृतिः, तीर्थानन्दझा, निर्माणप्रकाशनम्, दिल्ली, 1985
3. महाभारतम्, (अनुवादकः) पं. गंगाप्रसादशास्त्री, भागः-16, महाभारतकार्यालयः, दिल्ली, वि.सं. 1998
4. उत्तररामचरितम्, आनन्दस्वरूपः, मोतिलालबनारसीदासः, दिल्ली, 1993
5. किरातार्जुनीयम्, भारवि, विश्वविद्यालयप्रकाशनम्, वाराणसी, 2007
6. ऋग्वेदः, (सं) विश्वबन्धुः, तृतीयभागः, विश्वेश्वरानन्द-वैदिकशोध-संस्थानम्, होशियारपुर, 1963
7. यजुर्वेदः, महर्षिदयानन्दसरस्वती, रामलालकपूरट्रस्ट, बहालगढ, सोनीपत, हरियाणा, 1984
8. अथर्ववेदः, (सं) विश्वबन्धुः, भागः -2, 6-10 काण्ड, विश्वेश्वरानन्द-वैदिकशोध-संस्थानम्, होशियारपुरम्, 1961
9. तैत्तिरीयब्राह्मणः, (सं) प्रो. पुष्पेन्द्रकुमारः भागः-2, नागप्रकाशकः, 1998
10. श्रीविष्णुपुराणमहापुराणम्, राजेन्द्रनाथशर्मा, नागप्रकाशकः, दिल्ली, 1985
11. काव्य-संचयनम्, डॉ. विजयगर्गः, भारतीयविद्या-प्रकाशनम्, दिल्ली, 2016

UGC - CARE Listed
अप्रैल-जून 2021

शोधप्रभा
वर्ष : 46, द्वितीयोऽङ्कः

# वैदिकवाङ्मये चिकित्साविज्ञानम्

डॉ. खेमराजरेग्मी*

वेदाः विज्ञानस्य अक्षयस्रोताः विद्यन्ते। भौतिकविज्ञान-रसायनविज्ञान- वनस्पतिविज्ञान-प्राणविज्ञान- भूगर्भविज्ञान-मनोविज्ञानेत्यादिभ्योऽतिरिच्य आयुर्विज्ञानविषयकं विशिष्टज्ञानमपि वेदेषु सन्निहितमस्ति। वैदिकदेवतासु अग्नि-इन्द्र-वरुण-अश्विनौ-मरुत्-रुद्र-आपः-पूषा -उषा-सोम-सवितेत्यादयो देवाः **'देवभिषक्'** रूपे स्वीकुर्वन्तः ताः मानवपशुजीवनयोः रक्षकरूपे चित्रिताः।[1]

**शतं ते राजन् भिषजः सहस्रमुर्वीगभीरा सुमतिष्टे अस्तु।**
**बाधस्य दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत्॥[2]**
**उन्नो वीरां अर्पय भेषजेभिर्भिषक्तं त्वा भिषजां शृणोमि॥[3]**

ऋग्वेद-यजुर्वेद-अथर्ववेदेषु एतादृशाः नैके मन्त्राः सन्ति येषु एतासां देवतानां चिकित्साकौशलं परिलक्ष्यते।[4] वेदेषु आयुर्विज्ञान-सम्बन्धितासु देवतासु अश्विनौ इत्येतं युगलं सर्वाधिकं महत्त्वपूर्णं विद्यते। तौ प्रसिद्धचिकित्सकौ वर्तेते। ऋग्वेदे तौ देवानां वैद्यौ कथ्येते।

**उतत्या देव्या भिषजा शं नः करतो अश्विना।[5]**

अथर्ववेदेऽपि तौ वैद्यौ एव कथ्येते।

**प्रत्याहतामश्विना मृत्युमस्मद् देवानामग्रे भिषजा शचीभिः॥[6]**

'अश्विनौ' इत्यस्य विविधप्रकारेण व्याख्या कृतास्ति। आयुर्विज्ञानस्य दृष्ट्या एतौ आदर्शचिकित्सकस्य प्रतीकौ स्तः। ज्ञानम् (सिद्धान्तः) कर्म (व्यवहारः) च आयुर्विज्ञानस्य

---

* (अतिथि-अध्यापकः), श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविश्वविद्यालयः,

1. चरकसंहिता, सूत्रस्थानम्, १.४५
2. ऋग्वेदः, १.२४.९
3. ऋग्वेदः, २.३३.१
4. ऋग्वेदः, १.२४.१४-१५, १.२५.२१, ७.८८.७, ८.४१.१, १०.१.१२९, यजुर्वेदः, २०.७३, ३.५७-६३, १६.५-८,११,१२,१५-२०, अथर्ववेदः, ५.१५.१२, ५.११.१, ७.९७.१, १५.५.१, १५.११.२,
5. ऋग्वेदः, ८.१८.८
6. अथर्ववेदः, ७.५.३

पक्षद्वयं कथ्यते। सुविज्ञस्य चिकित्सस्य कृते एतयोः द्वयोः ज्ञानम् आवश्यकम्।

**उभयज्ञो हि भिषक् राजार्हो भवति।[1]**

अश्विनौ खगस्य पक्षद्वयस्य सदृशौ वर्णितौ। आयुर्विज्ञानखगस्य एतत् पक्षद्वयं ज्ञानकर्मयोः प्रतीकं प्रतीकत्वेन विद्यते। एतत् पक्षद्वयं विना आयुर्विज्ञानस्य गतिः न सम्भवा। एतौ न केवलं देवानां चिकित्सकौ, अपितु काचित् शारीरिक-मानसिकव्याधिग्रस्तमनुष्यं नवजीवनं ददत् दृष्टिगतौ भवतः। एतौ स्वौषधीनां प्रयोगेण व्याधिसन्तप्तानां चिकित्सां कुरुतः। औषधिभिः युक्तौ स्तः अतो निश्चयेनैव उत्तमौ वैद्यौ स्तः।

**युवं हस्थो भिषजा भेषजेभिः।[2]**

चरक-सुश्रुत-कश्यपसंहितास्वपि आयुर्विज्ञानस्य दैविकोद्भवस्य कथायां अश्विनीकुमारयोः उल्लेखोऽस्ति। चरकसंहितानुसारेण ब्रह्मणा प्रादुरभूत् आयुर्विज्ञानम्, प्रजापतिः अधीतः। प्रजापतेः अश्विनौ, 'अश्विनौ' इत्याभ्याम् इन्द्रः, इन्द्रात् महर्षिभरद्वाजः आयुर्विज्ञानम् अधीत्य अस्य विस्तारम् अकरोत्।

**ब्रह्मणा हि यथा प्रोक्तमायुर्वेदं प्रजापतिः।**
**जग्राह निखिलेनादवश्विनौ तु पुनस्ततः।।**
**अश्विभ्यां भगवांश्छक्रः प्रतिपेदे ह केवलम्।**
**ऋषि प्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागताम्।।[3]**

सुश्रुतसंहितायामपि आयुर्विज्ञानस्य इतिहासक्रमे अश्विनीकुमारयोः योगदानं दर्शितम्। अस्याः संहितायाः अनुसारेण ब्रह्मणा आयुर्वेदरुपदिष्टः, ब्रह्मणः प्रजापतिदक्षः अपठत्। दक्षप्रजापतेः अश्विनीकुमारौ अधीतवन्तौ, अश्विनीकुमाराभ्याम् इन्द्रः, इन्द्रात् धन्वन्तरिः ज्ञानमेतत् प्राप्तवान्।

**ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे,**
**तस्मादश्विनौ, अश्विनिभ्यामिन्द्रः इन्द्रादहम्।[4]**

चरकसंहिता-सुश्रुतसंहिता-काश्यपसंहितासु वर्णितायुर्विज्ञानस्य उद्भवसम्बध्याम् अस्यां कथायां कायचिकित्सायाः प्रवर्तकः ऋषिभरद्वाजः, शल्यचिकित्सायाः प्रवर्तकः ऋषिधन्वन्तरिः, कौमारभृत्यस्य (बालचिकित्सायाः) प्रवर्तकः ऋषिकश्यपः एते सर्वेऽपि एतत् स्वीकुर्वन्ति यत् अश्विनौ कायचिकित्सा-शल्यचिकित्सा-बालचिकित्सेत्येतेषां ज्ञानम् इन्द्राय प्रदत्तवन्तौ तथा इन्द्रेण एतज्ज्ञानं तेभ्यः क्रमशः दत्तम्। शल्य-शलाका-कायचिकित्सा-

1. सुश्रुतसंहिता, सूत्रस्थानम्, ३.४५
2. ऋग्वेदः, १.१५७.६
3. चरकसंहिता, सूत्रस्थानम्, १.४५
4. सुश्रुतसंहिता, सूत्रस्थानम्, १.२०

भूतविद्या-कौमारभृत्य-अगदतन्त्र-रसायनतन्त्र-वाजीकरणम् इत्येतानि आयुर्वेदस्य अष्टौ अङ्गानि सन्ति। वैदिक-अश्विनौ इत्यनयोः परम्परायां शल्य-शालाक्यौ चिकित्सायाः अनिवार्यमङ्गे मन्येते यतः प्रथमे देवासुर-संग्रामे व्रणोत्पत्तेः रोहणं भूत्वाद् भवनाद् तथा यज्ञस्य शिरयोजनत्वात् शल्यतन्त्रं परम्परया प्रधानं मन्यते।

सुश्रुतशल्यचिकित्सायाः क्षेत्रे 'अश्विनौ' इत्यनयोः दक्षतां वर्णयन् अश्विनीकुमाराभ्यां यज्ञस्य शिरसंयोजनस्य कथायाः उल्लेखं कुर्वन् कथ्यते यद् रुद्रेण यज्ञस्य शिरोच्छेदनं कृतम्, तदा देवताभिः अश्विनीकुमारयोः पार्श्वं गत्वा उक्तं यद् भवन्तौ यज्ञस्य शिरः योजयताम्, तदा अश्विनीकुमाराभ्यां यज्ञस्य शिरः योजितम्।

**श्रूयते हि यथा रुद्रेण यज्ञस्य शिरश्छिन्नमिति, ततो देवा अश्विनावभिगम्योचुः-**

**भवन्तौ! नः श्रेष्ठतमौ युवां भविष्यथः, भवद्भ्यां यज्ञस्य शिरः सन्धातव्यमिति। तावूचतुरेवमस्त्विति। अथ तयोरर्थे देवा इन्द्रं यज्ञभागेन प्रसादयन्। ताभ्यां यज्ञस्य शिरः संहितम् इति।**[1]

अश्विनौ अङ्गप्रत्यारोपणे कुशलौ आस्ताम्। सुश्रुतसंहितायाम् उद्धृता उपर्युक्ता यज्ञस्य खण्डितस्य शिरसः अश्विनिभ्याम् द्वारा योजनस्य कथा तैत्तिरीयसंहितायाम्,[2] मैत्रायणीसंहितायाम्,[3] कठसंहितायाञ्च[4] प्राप्यते। कठसंहितायाम् अश्विनीकुमारयोः चिकित्सकरूपस्य वर्णनं कुर्वन् ताभ्यां यज्ञस्य शिरो योजनस्योल्लेखः इत्थमस्ति।

**यज्ञस्य शिरः अच्छिद्यत्। ते देवा अश्विनौ तमब्रुवन् भिषजौ वै स्थः। इदं यज्ञस्य शिरः प्रत्यद्यत्तम् इति। तौ अब्रूताम् वरं वृणावहै। ग्रहा एव नौ अत्रापि गृह्यताम् इति। ताभ्यामेतत् अश्विन् अगृह्णन्। ततो वै तो यज्ञस्य शिरः पत्यधत्तम्। तौ देवा, अब्रुवन् अपूतो वै इमौ मनुष्यचरौ भिषजौ इति। अपूतौ ह एष अमेध्यो भो भिषक्। तौ बहिष्पवमानेन पावयित्वा ताभ्यामेताश्विनमगृह्णन्**[5]

अस्मिन् सन्दर्भे एतदपि उल्लेखनीयमस्ति यद् मनुष्याणां चिकित्सकत्वात् पूर्वम् अश्विनौ 'अपूतः' एवम् 'अमेध्यः' मन्येते। तत्पश्चाद् देवताः तौ बहिष्पवमानस्तोत्रैः पवित्रं कृत्वा सोमस्याधिकारित्वेन नियुक्तं कुर्वन्ति। शतपथब्राह्मणेऽपि अश्विनौ इत्याभ्यां यज्ञस्य शिरसः योजनस्य प्रसङ्गः प्राप्यते।

**तौ एतद्यस्य शिरः प्रत्यधत्तम्।**[6]

---

1. सुश्रुतसंहिता, सूत्रस्थानम्, १.१७
2. तैत्तिरीयसंहिता, ४.६.१
3. मैत्रायणीसंहिता, ६.४.९
4. कठसंहिता, २७.४.५
5. कठसंहिता, ६.४.९
6. शतपथब्राह्मणम्, १४.१.१.१५

कर्मणैव मानवजीवनस्य साफल्यं भवति। कर्मैव स्वाभीष्टसाधनपुरःसरः मोक्षावाप्तिमपि साधयति। ईशावास्योपनिषदि वर्णितमस्ति–

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे।।[1]**

भारतवर्षे शिक्षायाः इतिहासः अतीव प्राचीनः वर्तते। ऐतिहासिकदृष्ट्या भारतवर्षे शिक्षायाः प्रादुर्भावः वैदिकीशिक्षातः अभवत्। संस्कृतज्ञाः मन्यन्ते यत् सृष्टेरादावेव परमपितापरमात्मना सर्वाङ्गतया मानवजीवनमुन्नेतुं वेदमुखेन शिक्षा प्रकल्पिता। अर्थात् सकलजगतां सृष्टिस्थितिलयकर्तुः भगवतो परब्रह्मणो निःश्वासभूता हि वेदाः ज्ञानराशयः, वेदैरेव लोकानां नियमनं भवति। वैदिकवाङ्मये वेदानाम् अपौरुषेयत्वं नित्यत्वञ्च स्व. ीकृतमस्ति महर्षिभिः। नैय्यायिकानां मते सृष्ट्यादौ परब्रह्मणः परमेश्वरस्य निःश्वासाविर्भूता वेदाः। तद्यथा–

**अनादिनिधना नित्या, वागुत्सृष्टा स्वयम्भुवा।**
**आदौ वेदमयी दिव्या, यतः सर्वाः प्रवृतयः।।[2]**

वैदिकशिक्षा समेषां मानवानामभ्युदयकारिणी विद्यते, सर्वेषां समानाधिकारो वर्तते विद्याभ्यासे। वेदमन्त्रे भावनेयं सर्वविद्या सर्वग्राह्या च विद्यते। तद्यथा–

**यथेमां वाचं कल्याणीमावदानि जनेभ्यः।**
**ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय।।[3]**

ऋग्यजुस्सामाथर्वाख्याश्चत्वारो वेदाः सर्वविदिता एव सन्ति। वेदशब्दः **विद्–ज्ञाने, विद्लृ–लाभे, विद्–सत्तायां, विद्–विचारणे इति चतुर्भिर्धातुभिर्घञि प्रत्यये[4]** सति निष्पन्नो भवति। वेदो नाम– **इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति सः वेदः[5]** अतो वेदा हि सकलज्ञानस्य स्त्रोतांसि सन्ति। वैदिकशिक्षायां मानवकल्याणार्थं धर्माचरणार्थं वा या वर्णव्यवस्था, आश्रमव्यवस्था च कल्पिता सा वस्तुतः सामान्यमानवानां बुद्धेर्विषयो नास्ति। मानवोऽस्मिन्समाजे केन प्रकारेण जीवनं यापयेत्, तस्य सामाजिकधार्मिक–नैतिकाध्यात्मिकानां समेषामपि मूल्यानां विशिष्टचिन्तनपूर्वकं वर्णाश्रमव्यवस्था कल्पिता वर्तते। यदि मानवो भारतीयशिक्षापद्धतेः वैदिकव्यवस्थायाश्चानुकरणं कुर्यात् तर्हि समाजे नैकविधः समस्याः अस्माकं समक्षे न भविष्यन्ति। एतदर्थम् आश्रमव्यवस्था वैदिकशिक्षायाः एकान्यतमा विशेषता वर्तते। व्यवस्थायामस्यां मानवजीवनः चतुर्षु विभागेषु विभज्यते।

1. ईशावास्योपनिषद्–2
2. महाभारतशान्तिपर्व, 231/56
3. यजुर्वेदः 26/2
4. संस्कृत–हिन्दी शब्दकोषः, वामनशिवराम आप्टे
5. सायणाचार्यः / कृष्णयजुर्वेदभाष्यभूमिका

ते च चत्वारो विभागाः **ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाश्रमाश्चेत्यभिधानेन** शास्त्रेषु कल्पिताः सन्ति।




महाभारतस्य शान्तिपर्वण्यपि उक्तम्- **लोकहितमनुतिष्ठता धर्मसंरक्षणार्थमा-श्रमाश्चत्वारोऽभिनिर्दिष्टाः**[1]। एतेषाम् आश्रमाणां चतुर्णामपि स्व-स्व विभागानुसारं कर्तव्यान्यपि वर्तन्ते। मानवजीवनोद्देश्यप्राप्तये आश्रमव्यवस्थायाः महती भूमिका वर्तते। उक्तं च-

**अनाश्रमी यज्जपति यज्जुहोति ददाति यत्।**
**न तस्य फलमश्नाति प्रेत्य चेह च कर्मणः॥**[2]

सर्वे जानन्ति यत् मानवजीवने गृहस्थाश्रमस्य स्थानं ब्रह्मचर्योपरान्तमायाति। शास्त्राणां मते मानवानां कृते ब्रह्मचर्यः त्यागस्य जीवनं भवति, गार्हस्थ्यं पुनः परिग्रहस्य। गार्हस्थ्ये पत्नी तु सर्वोत्तमो परिग्रहः। यथा बाल्यावस्थायां ब्रह्मचर्यात्पूर्वम् उपनयनसंस्कारो भवति तथैव गार्हपत्यात् प्राग् विवाहसंस्कारो भवति। बालकः ब्रह्मचर्याश्रमस्य अन्तिमकाले विवाहात् पूर्वं समावर्तनसंस्कारोपरान्तः स्नातकः, पश्चात् च गृहपतिर्गृहस्थो वा भवति। विवाहोपरान्तम् आवश्यकमस्ति यत् स्वजीवने धर्मार्थकाममोक्षाणामुपायान् तत्सम्बन्धिप्रतिपत्तीश्च सर्वतो भावेन प्रतिष्ठापयितुकामाः सन्ति। मानवान् सामाजिकसौष्ठवार्थं, **भौतिकसुख-सम्पादनार्थं**[3] चानुत्तमोपयोगो विवाहद्वारेण पत्नीलाभस्यास्ति। केन कस्या विवाहो भवति एतत् सम्बन्धे श्रीमद्भागवते निर्दिष्टम्-

**ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः।**
**तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित्॥**[4]

मानवजीवने विवाहस्तु संस्कार एव जन्म-जन्मान्तरसम्बन्धोद्बोधकः। तत्र कन्यायाः रमणीयत्वं न केवलं शारीरिकमपितु मानसिकं, वाचिकं, चारित्रिकञ्च विशेषतः

8. भारतीयसंस्कृति-सौरभम्, प्रो. रामजीउपाध्यायः
9. दक्षस्मृतिः
10. सुखस्य स्त्रियो मूलम्। - नाट्यशास्त्रम् 22.94
11. श्रीमद्भागवत - 10/60/15

परीक्षणीयमासीत्। इतोऽप्यधिकाः केचिदपरे लाभाः सन्ति। पत्नीं विना पुरुषोऽपूर्णो भवति। महाभारतेऽपि गृहस्थाश्रमान्तर्गते पत्न्याः माहात्म्यं प्रदर्शयते। तद्यथा-

**अनुरक्ता हिता चैव स्निग्धा चैव पतिव्रता।**
**यस्य वै तादृशी भार्या धन्यः स मनुजो भुवि॥**
**भार्या हि परमो नाथः पुरुषस्येह पठ्यते।**
**असहायस्य लोकेऽस्मिन् लोकयात्रा सहायिनी॥**
**नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः।**
**नास्ति भार्यासमो लोके सहायो धर्मसाधनः॥**[1]

वैदिकशिक्षादृष्ट्या धार्मिकविधानेषु पत्युः सहधर्मिणी सा भवेदेवेति नियमः। अत एव देवानां प्रीत्यर्थं यज्ञपूजापरायणे प्राचीनसमाजे पत्न्या आवश्यकतासीत्। अनेन प्रकारेण गृहस्थजीवने पुत्रविहीनानां पितृणामपि पारलौकिकी सुगतिर्न भवति, तेऽपि स्वपुत्रान्, सपत्नीकान्, सपुत्रांश्च विधातुं समीहन्ते। वैदिकशिक्षादृष्ट्या पुरा भारतेऽष्टविधविवाहाः प्रचलिता आसन्। तद्यथा-




वेदाचार्याणां मते पूर्वोक्ताश्चत्वारो विवाहप्रकाराः स्नात्कोचिताः सम्मताः तथा च अवशिष्टाश्चत्वारः आसुरादयो निम्नाः अधमाश्च स्वीकृताः।

एतदतिरिच्य सर्वेषां गृहस्थानां वानप्रस्थानां च कृते पञ्चमहायज्ञानां विधानमासीत्। ते सन्ति- **''ब्रह्मयज्ञः, देवयज्ञः, पितृयज्ञः, भूतयज्ञः, अतिथियज्ञश्चेति''**। एतैर्यज्ञैः कश्चिद् गृहस्थस्तेषां सर्वेषामुपकारिणां सहायकानां च ऋणाद् विमुक्तो भवितुमर्हति। मानवसंस्कृतिदृष्ट्या पञ्चमहायज्ञा अत्युच्चस्थानीयाः सन्ति, यतोहि मानवस्य विश्वेषां प्रत्यक्षाप्रत्यक्षाणां, जीवाजीवानां, दिव्यादिव्यानां च भरण-पोषण-साधारणं

1. महा.भा., शान्तिपर्वः 142. 7,8,9

शाश्वतमभीप्सिततममासीदिति प्रतीयते। महायज्ञविधानं किमप्यपूर्वं मानवस्याध्यात्मिकं सात्त्विकं च प्रगमास्ति, येन सोऽखिलप्रपञ्चात्मकं जगदात्मरूपमिव नित्यं भावयति। गृहस्थाश्रमे मानवानां कृते **देवयज्ञः** सम्प्रतिष्ठितः प्रतिभाति। प्रतिदिनमग्नौ समिधाधानं देवानां कृतं आहुतिप्रदानं तेषां स्तुतिश्च देवयज्ञस्य मूलस्वरूपमअस्ति। देवाः पापान्निवारयन्ति सत्पथे च प्रवर्तयन्ति। शङ्कराचार्यः पञ्चायतनाभिधं देवपूजनं प्रवर्तयामास। तत्र पञ्च देवाः सन्ति- **विष्णुः, शिवः, दुर्गा, गणेशः, सूर्यश्च।** तथा च गृहस्थाश्रमे **पितृयज्ञोऽपि** महत्त्वपूर्णोऽस्ति। पितृयज्ञस्य अपरनाम तर्पणयज्ञोऽस्ति कारणं यज्ञक्रियायां सामान्यदृष्ट्या पितरो दिवंगता ऋषिपूर्वजाः सन्ति। तेऽतिशयोदाराः सन्ति। गतेऽपि पितरि तस्यास्तित्वं भावदृष्ट्या वंशजनां सानिध्ये भवत्येव। पितरस्तु प्रायोऽस्माकं पारिवारिकसदस्या एव स्वीयकृतित्वेनास्माकं प्रोत्साहनं, पथप्रदर्शनं, रक्षणञ्च कर्तुं योग्यतमाः सन्ति। **भूतयज्ञेन** सर्वचराचरभूतानां कृते बलिः प्रदीयते इति दैनन्दिनविधानम्। प्रकरणेऽस्मिन् भूतानि सन्ति प्राणिजातम्, अथापि मनुष्या दिव्या अप्राणिनश्चाखिला सृष्टिः चराचरैव। येषां प्रीत्यर्थं सन्धारणाय चान्यथा विधानं कृतमेव, तान् विहाय सर्वेषां कृते आत्मोचितभोज्यपदार्थेभ्यो भागो विविधविधिना समर्प्यते। अत्र भूतेषु विश्वेदेवाः प्राथम्यं भजन्ते। ते सन्ति - **सोम, अग्निः, त्वष्टा, इन्द्रः, पूषा, विष्णुः, अश्विनौ, मित्रावरुणौ अङ्गिरसः**[1]। तथा च वैदिकशिक्षायाम् **अतिथि देवो भव** इत्युक्त्वा अतिथियज्ञस्य माहात्म्यं स्थापितम्। वैदिकयुगस्यातिथियज्ञस्य विशदकल्पनाथर्ववेदे वर्णिता। अथर्ववेदे उक्तम्- अतिथिना सह सम्भाषणं, तस्मै उदकार्पणम्, आवासप्रदानं, भोजनसमर्पणम्, अञ्जनाभ्यञ्जनदानं, शयनव्यवस्था चेत्यादीनि यज्ञकर्माङ्गानीति विहितम्। उपनिषद्युगेऽतिथिसत्कारः सौहार्देन निष्पादितः आसीत्। अतिथये घृतमधुसम्पृक्तपदार्था भोजनाय समर्पणीया आसन्। महाभारते शान्तिपर्वणि कपोतलुब्धकाख्याने कपोतो पत्नीग्राहकं व्याधमतिथिं मत्वा निवेदयति। तद्यथा-

**सन्तापश्च न कर्तव्यः स्वगृहे वर्तते भवान्।**
**शरणागतस्य कर्तव्यमातिथ्यमिह यत्नतः॥**[2]

आतिथ्यं न केवलं राजभिः ऋषिभिश्च सुसम्पादितं दृश्यतेऽपितु सामान्यजनैरपि सुकृतमातिथ्यं भारतीयसंस्कृतिं सर्वोच्चशिखरं प्रापयति।

अनेन स्पष्टं प्रतिभाति यद् वैदिकयुगे सुसंस्कृतजनाः आनन्दमनुभवन्तो नित्यकर्मण्याः स्वीयं पूर्णजीवनं सामर्थ्य-सौन्दर्यसुरभितमकुर्वन्। गार्हस्थ्याश्रमे सम्पूर्णमानवजीवनमेव धर्मार्थकाममोक्षप्रवृत्तिभिः उदात्तीकृतमस्त्विवति तेषां वैदिकमहामानवानां पृहणीयं प्रतिभाति। वैदिकगृहस्थानां प्रारम्भिकयुगे वर्णचतुष्टयेन सम्यग्विभाजनं नासीत्। परञ्च प्रवृत्तिविशेषे रुचिपरायणाः वर्गाः परवर्तितवैदिकयुगे स्वस्वप्रवृत्त्यानुकूलं ब्राह्मणाः, क्षत्रियाः, वैश्याः, शूद्राश्च

1. विष्णुधर्मसूत्रम्- 67
2. महा. भा. शान्तिपर्वः 141

सञ्जाताः। पूर्वोक्तदेवानां चारित्रिकविशेषतानुसारेण विविध-वर्णस्य गृहस्थानां जीवनविन्यासो विशदीकरणीयः। इमे वैदिकगार्हस्थ्यजीवनादर्शाः परवर्तियुगेऽपि शाश्वतमात्मसात्कृता लोकान् सत्पथमुन्नयन्ति स्म। अत एव सुखसुरभिः वैदिकगृहस्थानां जीवनम् आसीदिति निश्चितमेवेति।

## सन्दर्भग्रन्थसूची -

1. उपाध्यायः, प्रो. रामजी, ''भारतीयसंस्कृतिसौरभम्'', चौखम्बा-सुरभारती-प्रकाशनम्-वाराणसी
2. कौण्डिन्न्यायनः, प्रमोदवर्धनः, ''गौतमधर्मसूत्रम्'', चौखम्बा-विद्याभवन-वाराणसी
3. द्विवेदी, डॉ.कपिलदेवः, ''संस्कृतनिबन्धशतकम्'', विश्वविद्यालय-प्रकाशनम्, वाराणसी
4. द्विवेदी, डॉ. पारसनाथः, ''वैदिक साहित्य का इतिहास'' चौखम्बा-सुरभारती-प्रकाशनम्, वाराणसी
5. द्विवेदी, डॉ. कपिलदेवः, ''संस्कृत साहित्य का समीक्षात्मक इतिहास'', रामनारायणलाल-विजयकुमार-प्रकाशकः, इलाहबादः-211001
6. मिश्रः, प्रो. जयकृष्णः, ''धर्मशास्त्रस्येतिहासः''

UGC - CARE Listed
अप्रैल-जून, 2021

शोधप्रभा
वर्ष : 46, द्वितीयोऽङ्कः

# मत्स्यपुराणे वास्तुतत्त्वानां वर्णनम्

डॉ. कन्हैयाकुमारझा*

पुराणं वेदसमकालिकं प्राक्कालिकं वा इत्यस्य वर्णनं मत्स्यपुराणे दृश्यते। यथा–

**पुराणमेकमेवासीत्तदा कल्पान्तरेऽनघ ।**
**त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥**[1]

**पुरा अपि नवं पुराणम्** इति रीत्या प्राचीनविहितस्य क्रियाकलापस्य विविध-परिस्थितौ नवप्रयोगवर्णनपरकात् पुराणम् अद्वितीयम् इति निश्चप्रचम्। पुराणप्रवाचकः सूतः स्थापत्यस्य उत्कृष्टतमः विद्वान् आसीत्। अपि च विविधेषु पुराणेषु तत्तद्देवता प्रतिपादकत्वात् तेषां समेषां क्रियाकलापादीनां प्रतिपादनं भविष्यति।

प्रायः समेषु पुराणेषु स्थापत्यकलायाः वर्णनं लभ्यते। तेषु वास्तु–शिल्प–चित्रकलानां बहवः महत्त्वपूर्णबिन्दवः क्वचित् विस्तरात् कुत्रचिच्च सङ्केतमात्रेण गोचरीक्रियन्ते। एतेषु पुराणेषु वास्तुशास्त्रीयदृष्ट्या अत्यधिकं समृद्धं पुराणं मत्स्यपुराणं विद्यते। प्रसंगात् संक्षेपेण मत्स्यपुराणानुसारं वास्तुविषयकं विवेचनं करोमि।

मत्स्यपुराणे बहुषु स्थलेषु वास्तुतत्त्वानां वर्णनं वर्तते । अत एव मया तदनु अध्यायेषु तत्तत्स्थलेषु वास्त्वंशाः आगमिष्यन्त्येव परं संक्षेपतोऽत्र ते अंशाः प्रतिपाद्याः सन्ति। प्रथमतया वास्तुपदार्थः इत्यत्र निवासयोग्यत्वं वास्तुतत्त्वम् इतिरीत्या वस्तुधरातदन्वित वास्तुरिति।

## सृष्ट्युत्पत्तिः

वास्तुदृष्ट्या अयं भागः उत्कृष्टः वर्तते । यतः सृष्टिरेव वास्तोः आधारः । तदनु मत्स्यपुराणस्य द्वितीयेऽध्याये सृष्ट्युत्पत्तिकथा अस्ति। अत्र भगवता उक्तं यत्

---

* पूर्वशोधच्छात्रः, वास्तुशास्त्रविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृविश्वविद्यालयः, नवदेहली

1. म0पु0अ053श0-4

महाप्रलयसमयावसाने अयं समग्र संसारः प्रसुप्तः इव भाति। सर्वत्रान्धकारः आसीत्। ततः अन्धकारं समाप्य स्वयम्भूः समुत्पन्नोऽभवत्। नारायण इति ख्यातः सः आदौ अप एव ससर्ज तासु बीजम् अवासृजत्। तदेव सहस्रवर्षानन्तरं स्वर्णमयाण्डं च रजतमयाण डं समभवताम्। ततः स्वयंभूः दिवं भूमिं च समकरोत् तदण्डशकलद्वयात्। एतावता अण्डतोभूतोपन्न इति मत्स्यपुराणके:

**तडागादिप्रतिष्ठापनम्**

अत्र मनः जलाशयगतं विष्णुम् उवाच यत् तडाग-आराम्-कूप-वापी-पुष्करिणी-देवतायनविषयाणां विधिं पृच्छामि। अस्य-वर्णनं 58 अध्यायेऽस्ति । तदा भगवान् प्राह पुराणेषु तडागकूपवापीपुष्कारिणां विधिः एक एव तथाहि-

**एवमेव पुराणेषु तडागविधिरुच्यते।**
**कूपवापीषु सर्वासु तथा पुष्करिणीषु च**
**एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च॥**[1]

उत्तरायणे शुक्लपक्षे शुभदिननिश्चितीकृते ब्राह्मणं स्वीकर्तव्यम्। ततः प्रागुत्तरप्लवे देशे चतुर्हस्तां चतुरस्तां शुभां वेदिं रचयेत्। ततः षोडशहस्तः मण्डपः स्यात्। तत्र कुण्डनिर्माणम् अपि भवेत् कुण्डसंख्या नव, सप्त, पञ्च वा स्यात् । क्रमेऽस्मिन् योनिमेखलादीनां निर्माणं कर्तव्यम्, तत्र सवर्णाः पताकाध्वजादीनां स्थानं स्यात्। तत्र मण्डपद्वाराणी तु अश्वत्थ-उदुम्बर-प्लक्ष-वटशाखा निर्मितानि स्युः। तत्र चतुर्षु द्वारेषु द्वारपालादीनां व्यवस्था अवगन्तव्या। ततः पुरोडाशं निर्मीय जरायां देवेभ्यः उत्सृजेत्। अत्र त्र्यरत्निभागः यूपः स्यात्। सः यूपः क्षीरकूक्षः विनिर्मितः भवेद् अपि च अयमपि निर्देशः दृश्यते-

**सौवर्णौ कूर्ममकरौ राजतौ मत्स्यदुण्डभौ।**
**ताम्रौ कुलीरमण्डूकाः वायसः शिशुमारकः।**
**एवमासाद्य तत् सर्वमादावेव विशाम्पते॥** [2]

एतावता विविधवस्तुचयनानन्तरं मण्डपं प्रतिगच्छेत्, ततः मण्डलानि रचयेत्। विविध सूक्तानां पाठः भवेत् । अत्र अथर्ववेदी ब्राह्मणः वरुणसूक्तं जपेत्। ततः विविधयज्ञीयकृत्यं कृत्वा मार्जनादिकं कृत्वा तडागेष्वादौ कनकालङ्कृतां गां तडागे अवतारयेत्। अयमेव तडागविधिः संक्षेपेणात्र कतिपय अंशः द्रष्ट्व्याः-

1. वेदीनिर्माणम् 2. यूपाय क्षीरकृक्ष-चययनम् 3. मण्डपनिर्माणमिति।

**त्रिपुरसंरचनम्-**

130 अध्याये मयद्वारा त्रिपुरसंरचनप्रकारः दृश्यते। वास्तुदृष्ट्या इदं प्रकरणम् प्रतिपाद्यं भवति। अस्य त्रिपुरस्य वैशिष्ट्यम् एतादृशम् मत्स्ये निरूपितम्।

---

1. मत्स्य पु. अ 58. 50.51
2. मत्स्य पु. अ 58. 18

**इति चिन्तायुतो दैत्यो दिव्योपायप्रभावजम्।**
**चकार त्रिपुरं दुर्गं मनः संचारचारितम्।।**[1]

एतावता यदि आधुनिकपरिपेक्ष्येऽपि चिन्त्यते तर्हि मनः सञ्चारितं न कुत्रापि दृश्यते इति। पुरसंरचनायां प्राकारः मार्गः गोपुरम् अट्टालकद्वारम्, अट्टालगोपुरम्, रा. जमार्गम्, रथ्या, उपरथ्या, चत्वरः, अन्तःपुरम्, शिवमन्दिरम्, सवटानि तडागानि, वापी सरांसि, आरामसभाः उद्यानानि, उपनिर्गमः, इत्यादीनि मुख्यानि वास्तुतत्त्वानि सन्ति। यथा–

शतयोजनविस्तारयुतं पुरम्,[2] कृष्णायसमयपुरं तारकासुरपुरम्[3], रजतपुरं विद्युन्मालीपुरम्[4], स्वर्णमयपुरं मयपुरम्[5] पुष्यनक्षत्रसंयोगे तस्य निर्माणं[6] पुष्पकं शिवस्य पुरम्,[7] चित्रशालाः चतुःशालोत्तमानि भवति स्म[8] सप्ताष्टदशभौमानि सत्कृता[9] त्रिपुरे हेमरजतलौह-मणिरत्नाग्नाङ्किताः गिरिसन्निभाः प्रकाराः आसन्[10] तत्र कन्यापुरस्य स्थानम् आसीत्[11] मायानिवारणाय उपकरणद्वारापरिखाशतगम्भीराः आसन्[12] एतावता पुररचनायां ते विषयाः भवन्तीति ज्ञातम्।

**उत्कृष्टवापीनिर्माणम्** अत्र 136 अध्याये अमृतमयवापी निर्माणप्रसङ्गः दृश्यते। यत्र मयवचनम् इत्थम् अस्ति–

**वापीमृततोयेन पूर्णा स्रक्ष्ये वरौषधी।**
**जीविष्यन्ति तदा दैत्याः संजीवनवरौषधैः।।**[13]

अयम्भावः एतादृशा वापी आसीत् यत्र अमृततुल्यं जलमस्याः दैर्घ्यसन्दर्भे पुनः उल्लिखितं यत्–

**द्वियोजनायतां दीर्घा पूर्णयोजनविस्तृतम्।**
**आरोहसंक्रमणवतीं चित्ररूपां कथामिव।।**[14]

एतावता अत्र वापीस्वरूपवर्णनं दृश्यते।

---

1. म पु. अ 130.1
2. मत्स्य पु. अ 129.30-31
3. मत्स्य पु. अ130-7
4. मत्स्य पु. अ130-8
5. मत्स्य पु. अ130-9
6. मत्स्य पु. अ130-11
7. मत्स्य पु. अ130-12
8. मत्स्य पु. अ130-16
9. मत्स्य पु. अ130-17
10. मत्स्य पु. अ130-22
11. मत्स्य पु. अ130-24
12. मत्स्य पु. अ130-26
13. मत्स्य पु. अ 136.10
14. मत्स्य पु. अ136-12

**दुर्गनिर्माणचर्चा-**

मत्स्यपुराणस्य 217 अध्याये दुर्गस्वरूपचर्चा दृश्यते। अत्र षड्विधदुर्गचर्चा वर्तते। तथाहि-

**तत्र दुर्गं नृपः कुर्यात् षण्णामेकतमं बुधः।**
**घन्वदुर्गं महीदुर्गं नरदुर्गं तथैव च ।।**
**वाक्षं चैवाम्बुदुर्गं च गिरिदुर्गं च पार्थिवः।**
**सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते।।[1]**

अत्र गिरिदुर्गस्य स्वरूपं तु गिरिदुर्गं परिखासंयुक्तं वप्राटालकसंयुक्तं शतघ्नीयन्त्रयुक्तञ्च भवेत्। तत्र चतस्रः वीथयः स्युः प्रथमायां देवमन्दिरम्, अपरस्यां राजभवनम्, तृतीयायां धर्माधिकारीणां स्थानम्, चतुर्थ्यां दुर्गस्य मुख्यमार्गाः स्युः। अत्र दुर्गस्वरूपम्, आयतं चतुरस्रं वृत्तं वा कारयेत्। मुक्तिहीनं, त्रिकोणं यवमप्यम्, अर्धचन्द्रकारं वज्राकारं स्यात्।

**वास्तुप्रादुर्भावकथा -**

अत्र वास्तुपुरुषस्य उत्पत्तेः वर्णनं वर्तते। अन्धकासुरस्य वधस्य समये भगवतः शंकरस्य ललाटात् भूमौ एकः स्वेदबिन्दुः अपतत्। तस्मात् विन्दोः एकः विशालाकृतिवान् पुरुषः प्रकटितोऽभवत्। तेन अन्धकासुरस्य रक्तपानं कृतम् परन्तु सः तृप्तः नाभवत्। बुभुक्षया व्याकुलं भूत्वा ब्रह्माण्डनायकं भक्षणार्थं सः उद्यतोऽभवत्। तदा सर्वैः देवैः तं गृहीत्वा अधोमुखं भूमौ निवेश्य वास्तुपुरुषस्य रूपे तस्य प्रतिष्ठा कृता।[2]

**वास्तुचक्रवर्णनम्-**

अत्र वास्तुभ्रमणवर्णनं दृश्यते कालानुगुणं यथा चैत्रे व्याधिः, वैशाखे धेनुः रत्नं च, ज्येष्ठे मृत्युः, आषाढे कर्मकारः रत्नं पशुञ्च श्रावणे भृत्यलाभः, भाद्रपदे हानिः, अश्विने पत्नीनाशः, कार्तिके धनलाभः, मार्गशीर्षे भोज्यपदार्थप्राप्तिः, पौषे चौरभयम्, माघे लाभः, अग्निभयं च, फाल्गुने सुवर्णं पुत्रप्राप्तिश्च[3] ।

**गृहारम्भे प्रशस्तानि नक्षत्राणि-** अश्विनी, रोहिणी, मूलम्, उत्तरात्रयं मृगशिरा, स्वाती, हस्तः, अनुराधा चेति।[4]

**वासरः-** रविमङ्गलवासरौ परित्यज्य सर्वे शुभाः।[5]

**त्याज्ययोगाः-** व्याघात-शूल-व्यतीपात-अतिगण्ड-विष्कुम्भ-गण्ड-परिघ-वज्र योगत्याज्याः।[6]

---

1. मत्स्यपु. अ217-6.7
2. मत्स्यपु. 252 अध्याये।
3. मत्स्यपु. अ 253 2-5
4. मत्स्यपु. अ 253- 6
5. मत्स्यपु. अ 253-7
6. मत्स्यपु. अ 253-7-8

स्वीकृतमुहूर्ताः श्वेत–मैत्र–माहेन्द्र–गान्धर्व–अभिजित–रोहिण–वैराज–सावित्राः स्वीकर्तव्याः। उपर्युक्त ज्यौतिषविधानम् वापीकूपतडागादीषु प्रयोक्तव्यम्।[1]

**पदवास्तु–** 253 अध्याये एकाशीतिपदवास्तोः चर्चा अस्ति। तत्र कनकश्लाकया दशपूर्वायता दशोत्तरायता कार्या रेखा अनेन 81 पदानी निर्माणं स्यात् इति।[2]

**पददेवाः 253** पददेवतानामपि चर्चास्ति। तत्र चतुष्पञ्चाशत् देवाः भवन्ति। बाह्यतः द्वात्रिंशत् अन्तः त्रयोदशदेवाः भवन्ति।[3]

**मर्मस्थलवर्णनम्–** अत्र वायोः आरभ्य रोगपर्यन्तं पितृगणात् शिखिपर्यन्तं, मुख्यात् भृशपर्यन्तं, शोषात् वितथपर्यन्तं, वंशाः ज्ञेयाः। एभिः त्रिशूलत्रिकोणगामीणि मर्मस्थलानि अवगन्तव्यानि।[4]

**चतुःषष्ठिपदवास्तुः–** अत्र 253 अध्यायेऽस्य वास्तोः प्राशस्त्यं दृश्यते इति।[5]

**राजप्रासादनिर्माणम्–** अत्र 254 अध्याये आदौ एव चतुःशाल–त्रिशाल–द्विशालस्वरूपम् अस्ति। अत्रेदं तथ्यमवगन्तव्यम्।

**चतुःशालस्वरूपम्–** यः चतुः–शालः चतुर्द्वारैः भवनैः अलिन्दैः सम्पृक्तं भवति सः चतुःशालस्वरूपम्[6]सर्वतोभद्रसंज्ञकः एत देवमन्दिराय राजभवनाय उपयोगी अस्ति। एतावतात्र चतुःशालः चतुर्विधः अवगन्तव्यः। तत्र पश्चिमद्वारहीनशालः नन्द्यावर्तः दक्षिणद्वारहीनः वर्धमानः पूर्वद्वारहीनः स्वस्तिकः उत्तरद्वारहीनः रूचकसंज्ञकश्च भवति।

**त्रिशालस्वरूपम्–** उत्तरशालारहितः त्रिशालः धान्यकः मनुजाय कल्याणकारी इति। पूर्वशालाविहीनः सुक्षेत्रसंज्ञकः आयुप्रदाता, दक्षिणशालारहितः विशालः कुलक्षयकारकः इति। अत्र पश्चिमशालाहीनः पक्षघ्नः उच्यते। मित्रबन्धुविनाशाय भवतीति।

**द्विशालस्वरूपम्–** अत्र दक्षिणपश्चिमदिग्भागयुक्तः शालः द्विशालः धनधान्यप्रदः। पश्चिमोत्तरदिग्भागयुक्तः शालः यमसूर्यकः पूर्वोत्तरदिग्भागयुक्तः शालः दण्डः, पूर्वदक्षिणयुक्तः घनसंज्ञकः। पूर्वपश्चिमयुक्तः चुल्लीविनाशाय भवति। अनेन प्रकारेण विविधपुराणेषु बहुधा वास्तुघटकविषयाः वर्णिताः सन्ति।

**सोष्णीषवास्तुलक्षणम्–** शालायास्तु त्रिभागेन यस्याग्रे वीथिका भवेत्।[7] अत्र श्रेयोच्छ्रयवास्तुलक्षणम्– शालायास्तु पश्चाच्छ्रेयोच्छ्रयं भवेत्। पार्श्वयोः वीथिका यत्र तदुच्यते। सुस्थितवास्तुलक्षणम्– समन्ताद्वीथिका यत्र सुस्थितं वास्तु उच्यते। एतावतात्र 254 अध्याये वास्तुसन्दर्भितविविधविषयाणां परिचर्या दृश्यते।

1. मत्स्यपु. अ 253–8
2. मत्स्यपु. अ 253–21
3. मत्स्यपु. अ 253–22
4. मत्स्यपु. अ 253–37
5. मत्स्यपु. अ 253–47
6. मत्स्यपु. अ254–1
7. मत्स्यपु. अ 254.37

**अत्र 255 अध्याये**– विविधविषयाणां चर्चा दृश्यते। तत्रादौ स्तम्भमानम् अस्ति। तत्र बुद्धिमान् जनः भवनोच्छ्रायं सप्तगुणं कृत्वा अशीत्यंशसमं पृथुत्वं स्तम्भं स्यात्।[1] अपि च पृथुत्वे नवगुणे सति अशीत्यंशः तस्य मूलभागः भवेत्। अत्र चतुरस्रः रुचकः अष्टास्र वज्रः षोडशास्रः द्विवज्रः द्वात्रिंशास्रः प्रलीनकः भवति। अपि च मध्ये यः स्तम्भः भवति सः वृत्तः इति स्मृतः। एतावता स्तम्भस्य पञ्चप्रकारत्वं प्रतिपाद्य कतिपय अंशाः प्रतिपादिताः।

स्तम्भसमः उच्छ्रायः तुला ततः न्यूना उपतुला उच्यते। वस्तुतः मानात् तृतीयचतुर्थभागहीनः तुलैव उपतुलास्ति। वासगृहेषु दक्षिणद्वाराणि प्रशस्तानि। पूर्वदिग्भागे इन्द्र-जयन्तद्वारम् प्रेष्टम्। दक्षिणे याम्यवितथद्वारम् उपयुक्तम्। पश्चिमे पुष्पदन्तवरूणद्वारम् उपयुक्तम्। उत्तरे भल्लाटसौम्यं शुभदायमयः।

**अत्रवेधफलम्**– वास्तुषु सर्वत्र द्वारस्य वेधं वर्जयेत्। रथ्या विद्धौ कुलक्षयः तरुणा द्वेषबाहुल्यं पङ्गोन शोकः, कूपेन अपस्मारी व्यथा, कीलेन अग्निभयम् स्तम्भेण देवताविद्धे स्त्रीकृतः विनाशः भवति गृहेण गृहविद्धो गृहभर्तुः विनाशः गृहणी बन्धकी भवति। अन्त्यजगृहेण वेधे जातस्त्रभयम्। गृहोच्छ्रायद्विगुणितभूमिः यः भवति तर्हि वेधः न भवति। स्वयमुदघटिद्वारम् उन्मादाय भवति। स्वयं पिहितद्वारम् कुलनाशाय भवति। गृहस्य द्वारस्य मानं यदि स्वमानादधिकं भवति तर्हि राजभयं न्यूनं च तस्करभयमपि भवति। द्वारस्य उपरि यद्द्वारं तदन्तकमुखं स्मृतम्। मार्गमध्ये निर्मितस्य भवनस्य यदि विस्तारः गृहे अधिकः भवति। यदि मुख्यद्वारम् अन्यद्वारं निकषा भवति तर्हि दोषो भवति। गृहस्य पूर्वदिग्भागे वटवृक्षः दक्षिणे उदुम्बरः पश्चिमे अश्वत्थस्य उत्तरे प्लक्षः शुभकारकः तद्वैपरीत्ये विपरीतफलदायकं भवति।[2] यदि कण्टकी क्षीरवृक्षाः स्यात् तर्हि भार्याहानिः सन्तीति भवति। अत्र कतिपयद्रुमाः श्रीसम्वधकाः भवन्ति यथा–

**पुन्नागाशोकबकुलशमीतिलकचम्पकान्।**
**दाडिमीपिप्पलीद्राक्षास्तथा कुसुममण्डपान्॥**
**जम्बीरपूगपनसद्रुमकेतकीभिर्जातीसरोजशतपत्रिकमल्लिकाभिः।**
**बन्नारिकेलकदलीदलपाटलाभिः युक्तं तदत्रभवनं प्रियमातनोति॥[3]**

**गृहनिर्माणविधिः**–

256 अध्याये गृहनिर्माणविधेः निरूपणं दृश्यते। अत्र पूर्वविहितभूपरीक्षणानन्तरं मानानुगुणं सर्वविधं प्रकल्प्य वाष्तोष्पते प्रतिजानीह मन्त्रद्वारा जुहूयात्। तत्र वास्तुयज्ञस्य पञ्चविधत्वं प्रतिपादितं सूत्रपात-स्तम्भारोपण-द्वारवंशोच्छ्राय-गृहप्रवेश-वास्तुशान्तिः अत्र पूर्वक्रमिकत्वं निरूपितम्।

---

1. मत्स्यपु. अ 255-1
2. मत्स्यपु. अ 255.11.22
3. मत्स्यपु. अ 255.23.24

**गृहनिर्माणे ग्राह्यकाष्ठविचारः**- 257 अध्याये गृहनिर्माणे काष्ठविचारो वर्तते। तत्र धनिष्ठापञ्चकभद्रादिकं परित्यज्य शुभे नक्षत्रे, काष्ठम् आनाय प्रवृतिः भवतु। इदम ध्यायन्तु सारं ग्राह्यकाष्ठविवरणमुपस्थाप्यते।[1]

(क) दिशादृष्टिः- पूर्वोत्तरपतितं दारुगृहनिर्माणे प्रशस्यते। अन्यदाशुभं विज्ञेयम्।[2]

(ख) वृक्षस्वभावदृष्टिः- क्षीरवृक्षोदभं दारुः गृहेन विनिवेशयेत् यदि दारुः विहगैः कृताधिवासयुतः अनिलपीडितः गजपीडितः विद्युन्निर्घातपीडितः अर्घशुष्कः भग्नशुष्कः चैत्यदेवालयोत्पन्नः नदीसंगमजः श्मशानकूपनिलयजः तडागादिसमूहभवः स्यात् तर्हि वर्जयेत् यदि विपुलां श्रियमिच्छति। अपि च कण्टकिनो वृक्षान् निम्बभीतकान् श्लेष्मातकानाम्रतरुनञ्च गृहकर्मणि वर्जयेत्।[3]

**गृहे ग्राह्यवृक्षाः**- आसना-अशोक-मधूक-सर्ज-शालाः शुभावहाः भवन्ति। चन्दनं पनसं धन्यं सुरदररु हरिद्रवः द्वाभ्याम् एकेन भवनं कुर्यात्।[4]

**देवप्रतिमानिरूपणम्**- 258 अध्याये विष्णोः भगवतः प्रतिमायाः चर्चा वर्तते। तत्र प्रतिमायाः दैर्घ्यं तदर्थः कः पदार्थः इत्यादीनां विवेचनमत्र प्राप्यते।

**देवप्रतिमालक्षणम्**- 259,60,61 अत्र विविधानां देवानां प्रतिमालक्षणम्, तस्य मानम्, आकारादिकथनस्वरूपवर्णनम्, प्रतिष्ठापनं पूजाविधिश्च वर्णितोऽस्ति।

**पीठिकाभेदलक्षणम्**- 262 अध्याये पीठिकायाः लक्षणं भेदश्च वर्णितोऽस्ति तत्र जगतीवृत्तम्, कण्ठपट्टम्, पट्टिका, देवभेदात् पीठिकासनम्, समग्रस्वरूपं निरूपितमस्ति।

**शिवलिङ्गनिर्माणविधिः**- 263 अध्याये शिवलिङ्गनिर्माणस्य प्रकरणमत्र दृश्यते । तत्र तस्य उच्छ्रायः, दैर्घ्य वा कीदृशम्भवेत् अस्मिन् सन्दर्भे चर्चा वर्तते।

**प्रतिमाविषयकविविधविधिः**- अत्र 264 अध्याये प्रतिमास्थापनप्रसङ्गे कुण्डनिर्माणविधेः वर्णनं दृश्यते। अपि च तदुत्तरे 265 अध्याये प्रतिमाप्रतिष्ठाविधिः तदुत्तरे 267 अध्याये प्रतिमाभिषेकविधिः वर्णितः ।

**वास्तुशान्तिविधिः**- 268 अध्यायेऽस्मिन् वास्तुशान्तिविधिः प्रक्रिया च दृश्यते। तत्र वास्तुदेवानां कृते देयद्रव्यपदार्थाप्यत्र निर्धारिताः सन्ति

**प्रासादवर्णनम्**- 269-270 अध्याये प्रासादस्वरूपं तस्य भेदाः निर्माणविधिः तत्संलग्नमण्डपभेदाः तन्नामस्वरूपं, तन्निर्माणविधिः दृश्यते।

अनेन प्रकारेण मत्स्यपुराणेषु बहुधा वास्तुघटकविषयाः वर्णिताः सन्ति। सर्वेषां विषयाणां विवेचमत्र निबन्धे असम्भवम्। अत एव संक्षिप्तेन वास्तुविषयाः विवेचिताः। अपरे निबन्धे पुनरन्येषां विषयाणां प्रतिपादनं करिष्यामीति प्रतिपाद्यात्रैव विरमामीति शम्।

---

1. मत्स्यपु. अ 257-1
2. मत्स्यपु. अ 257-3
3. मत्स्यपु. अ 257-4-7
4. मत्स्यपु. अ 257. 7-8

UGC - CARE Listed
अप्रैल-जून, 2021

शोधप्रभा
वर्ष : 46, द्वितीयोऽङ्कः

# दान एक सामाजिक कृत्य : अग्निपुराण के आलोक में

प्रो. सन्तोष कुमार शुक्ल*
एवं
डॉ. सुचिता यादव**

प्राचीनकाल से ही मानव समाज में मनुष्यों के नित्यकर्म के अन्तर्गत दानकर्म एक प्रमुख कर्तव्य माना जाता रहा है। दान के अर्थ को प्रतिपादित करते हुए धर्मशास्त्रकारों ने तीन प्रकार के गुणधर्म की चर्चा की है यथा- याग, होम एवं दान परन्तु इन तीन धर्मों में भिन्नता प्रदर्शित होती है यथाहि- याग में देवता के लिए वैदिक मंत्रों के साथ कुछ वस्तुओं का त्याग होता है, होम में अपनी किसी वस्तु की आहुति देवता के लिए अग्नि में दी जाती है तथा दान में किसी दूसरे व्यक्ति को अपनी वस्तु का स्वामी बना दिया जाता है। बृहदारण्यकोपनिषद् में सभी प्राणियों के लिए दम (आत्मनिग्रह), दान एवं दया नामक तीन प्रधान गुणों की चर्चा की गई है।[1] महाभारत के शान्तिपर्व में सत्य के तेरह स्वरूपों का वर्णन करते हुए मनसा, वाचा, कर्मणा, अहिंसा, सदिच्छा एवं दान अच्छे पुरुषों के शाश्वत धर्म कहे गये हैं। दान किसी भी रूप में जैसे मानसिक, वाचिक या कायिक रूप में हो सकता है। संस्कृत वाङ्मय में दान का बहुत विस्तृत स्वरूप प्राप्त होता है। महाभारत के सभी पर्वों में दान सम्बन्धी सामान्य संकेत मिलते हैं तथा अनुशासन पर्व में विशेष रूप से दान के विभिन्न स्वरूपों पर प्रकाश डाला गया है। पुराणों में विशेषत: अग्नि (अध्याय 208-215 एवं 217), मत्स्य पुराण (अध्याय 82-91 एवं 247-289), वराह पुराण (अध्याय 99-111) इत्यादियों में दान सम्बन्धी विवरण प्राप्त होते हैं। कतिपय निबन्धों में दान पर एक पृथक् प्रकरण उपस्थित किए गये हैं। इस

---

* संकायाध्यक्ष, संस्कृत एवं प्राच्य विद्या अध्ययन संस्थान, जवाहरलाल नेहरू विश्वविद्यालय, नई दिल्ली-110067

** शोध सहायक, भारतीय पुराण अध्ययन संस्थान , नई दिल्ली-110001

1. तस्मादेतत्त्रयं शिक्षेद् दमं दानं दयामिति। बृहदारण्यकोपनिषद ५/२/३
2. अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा।
   अनुग्रहश्च दानं च सतां धर्मः सनातनः।। महाभारत, शा.प. १६२/२१

सन्दर्भ में हेमाद्रि का दानखण्ड (चतुर्वर्ग चिन्तामणि), गोविन्दानन्द की दानक्रिया कौमुदी, नीलकण्ठ कृत दानमयूख, विद्यापति कृत दानवाक्यावलि, वल्लालसेन कृत दानसागर एवं मित्र मिश्रकृत दानप्रकाश अधिक प्रसिद्ध हैं। धर्मशास्त्र में दान के परिप्रेक्ष्य में प्रतिग्रह शब्द का विशिष्ट अर्थ होता है। मनु की टीका में टीकाकार मेधातिथि का कथन है कि ग्रहण मात्र प्रतिग्रह नहीं है, प्रतिग्रह उसी को कहते हैं जो विशिष्ट स्वीकृति का परिचायक हो अर्थात् जब उसे स्वीकार किया जाये तो दाता को अदृष्ट आध्यात्मिक पुण्य की प्राप्ति हो और जिसे देते समय वैदिक मंत्र पढ़ा जाए। जब कोई भिक्षा देता है तो वह कोई मंत्रोच्चारण यथा **देवस्य त्वा** इत्यादि मंत्रों का उच्चारण नहीं करता है अतः वह शास्त्रविहित दान नही है और न स्नेह से मित्र या नौकर को दिया गया पदार्थ ही प्रतिग्रह है। देवल ने शास्त्रोक्त दान की परिभाषा इस प्रकार की है – शास्त्र द्वारा उचित माने गये व्यक्ति के लिए शास्त्रानुमोदित विधि से प्रदत्त धन को दान कहा जाता है। जब किसी उचित व्यक्ति को अपना कर्तव्य समझकर कुछ दिया जाता है तो उसे धर्मदान कहा जाता है। भारतीय सामाजिक व्यवस्था में अनेक धार्मिक क्रिया-कलाप, प्रथा एवं परम्पराओं का प्रचलन रहा है। मनुष्य अपने इहलोक तथा परलोक को उन्नत तथा सही करने के लिए अनेक प्रकार की दान क्रियाएँ करता रहता है। यह दान किसी भी रूप में किया जा सकता है जैसे-कन्यादान, त्रीधन के रूप में दान, गौ दान, कूप, तडाग, सरोवर निर्माण के रूप में दान करना इत्यादि। दान शब्द की व्युत्पत्ति 'दा' धातु में 'ल्युट्' प्रत्यय के संयोग से हुआ है, जिसका अर्थ है – देना अर्थात् दान देकर किसी व्यक्ति को अपने अधीन करना सहज प्रतीत होता है।

### दान देने एवं ग्रहण करने की विधि -

पुराणकार द्वारा दान देने और दान ग्रहण करने के सम्बन्ध में उल्लेख किया गया है कि दाता को पूर्वाभिमुख होकर दान करना चाहिए और ग्रहीता को उत्तराभिमुख होकर दान ग्रहण करना चाहिए। इससे दान देने वाली की आयु में वृद्धि होती है तथा दान लेने वाली की आयु क्षीण नहीं होती है। यहाँ ग्रहीता की आयु क्षीण नहीं होती ऐसा कहने का तात्पर्य यह हो सकता है कि यदि इनके द्वारा उत्तराभिमुख न होकर भी दान ग्रहण किया जाता है तब भी इनकी आयु क्षीण नहीं होती है अर्थात् दोनों दाता तथा ग्रहीता दोनों की आयुर्वृद्धि होती है।[1] इसके साथ ही यह भी वर्णन किया गया है कि दान देने वाले तथा ग्रहण करने वाले के गोत्र एवं नाम का संकीर्तन करके दान देना चाहिए। कन्यादान में भी दाता और ग्रहीता के नाम एवं गोत्र का तीन बार उच्चारण करने का

1. दद्यात् पूर्वमुखो दानं गृह्णीयादुत्तरामुखः ।
आयुर्विवर्द्धते दातुर्ग्रहीतुः क्षीयतेनहि।। अग्निपुराण २०६/२१

उल्लेख किया गया है। दाता को स्नान एवं पूजन क्रिया के पश्चात् हाथ में जल लेकर व्याहृतियों (भूर्भुवः स्वः) का उच्चारण करके संकल्पपूर्वक दान करना चाहिए।

**नाम गोत्रं समुच्चार्य सम्प्रदानस्य चात्मनः।**
**सम्प्रदेयं प्रयच्छन्ति कन्यादाने पुनत्रयम्।**
**स्नात्वाभ्यर्च्य व्याहृतिभिर्दद्याद् दानन्तु सोदकम्॥[1]**

अग्निपुराण में सभी प्रकार के वस्तुओं के देवता विष्णु अथवा शिव को बताया गया है और उल्लेख किया गया है कि कोई भी वस्तु उनसे भिन्न नहीं है। दान देते समय पहले शैव्य का नाम लेकर अंत में दाता को **ददामि** कहना चाहिए उसके बाद संकल्प का जल प्रतिग्रहीता के हाथ में देना चाहिए।[2] अग्निपुराण में ग्रहण करने की विधि का निरूपण करते हुए उल्लिखित किया गया है कि ब्राह्मण को स्नान करके तथा जल का आचमन करके प्रयत्नपूर्वक पवित्र हो जाने पर ही दान लेना चाहिए तत्पश्चात् दान लेने वाले प्रतिग्रहीता के विषय में कहा गया है कि प्रतिग्रहीता को चाहिए कि वह श्रेष्ठ ब्राह्मण से दान लेकर उच्च स्वर से मंत्र का जप करे, क्षत्रिय से दान लेकर धीरे-धीरे मंत्र का जप करे, वैश्य से दान लेकर उपांशु जप करे तथा शूद्र से दान लेकर प्रतिग्रहीता मानसिक जप करे तथा स्वस्तिवाचन करे।[3] प्रतिग्रहीता को दान ग्रहण करते समय कहना चाहिए कि विष्णु दान देने वाले हैं और विष्णु ही द्रव्य है और मैं इस द्रव्य को ग्रहण करता हूँ। इस प्रकार से लिया हुआ दान कल्याणकारी तथा भोग एवं मोक्षरूपी फल को प्रदान करने वाला होता है।[4]

**दान का भेद-**

दान के दो भेद बताए गये हैं - इष्ट धर्म और पूर्त धर्म। इष्ट और पूर्त इन दो प्रकार के दानधर्म करने वाला मनुष्य भुक्ति तथा मुक्ति दोनों ही प्राप्त कर लेता है।

---

1. अ.पु. २०६।२२–२३
2. शिवो वा न ततो द्रव्यं व्यतिरिक्तं यतोऽस्तिहि ।
   द्रव्यस्य नाम गृह्णीयाद् ददानीतितथावदेत्।। अ.पु. २०६/४६
3. स्नातः सम्यगुपस्पृश्य गृह्णीयात् प्रयतः शुचिः ।
   प्रतिग्रहीता सावित्रीं सर्वदैव प्रकीर्तयेत् ।
   ततस्तु कीर्तयेत् साद्धद्रव्येण सहदैवतम्।
   प्रतिग्राही पठेदुच्चैः प्रतिगृह्याद्विजोत्तमात्।
   मन्दं पठेत् क्षत्रियात् तु उपांशु च तथाविशः।।
   मनसा च शूद्रात् स्वस्ति वाचनकं समाचरेत्। अ.पु. २०६/३७–४०
4. तोयं दद्यात्ततोहस्तेदाने विधिरयं स्मृतः।
   विष्णुर्दाताविष्णुर्द्रव्यंप्रतिगृह्वामि वै वदेत्।।
   स्वस्तिप्रतिग्रहं धर्मं भुक्तिमुक्तिफलद्वयम्।। अ.पु. २०६/५०–५१(१)

**दानधर्मान् प्रवक्ष्यामि भुक्तिमुक्तिप्रदान् शृणु।**
**दानमिष्टं तथा पूर्तं धर्मं कुर्वन् हि सर्वभाक् ॥[1]**

**पूर्त धर्म** – पूर्त धर्म का एक फल स्वर्ग प्राप्ति माना गया है, किन्तु उसका अलग ही कार्यक्षेत्र माना गया है जैसे कि जो दान ग्रहणकाल में सूर्य की संक्रान्ति होने पर तथा द्वादशी तिथियों को किया जाता है।[2] इसके अन्तर्गत बावड़ी, कुआँ, तालाब, मन्दिर बनवाना, अन्न का सदावर्त करना एवं बगीचे आदि बनवाना । ये सभी कर्म मोक्ष प्रदान करने वाले पूर्त धर्म कहलाते हैं।

**वापीकूपतडागानि देवतायतनानि च।**
**अन्नप्रदानमारामाः पूर्तं धर्मं च मुक्तिदम् ॥[3]**

**इष्ट धर्म** – इसके अन्तर्गत अग्निहोत्र करना, सत्य बोलना, वेदाध्ययन करना, अतिथि सत्कार करना तथा बलिवैश्वदेव करना ये स्वर्ग प्राप्ति कराने वाले इष्ट धर्म माने गये हैं।

**अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्।**
**आतिथ्यं वैश्वदेवञ्च प्राहुरिष्टञ्चं नाकदम् ॥[4]**

पुराणकार द्वारा दान के प्रकार बताकर उन्हें स्वर्ग प्राप्ति का मार्ग बताया है किन्तु साथ ही यह भी उल्लेख किया है कि दान सदैव देश, काल एवं पात्र के अनुसार ही देना चाहिए और इस प्रकार से दिया हुआ दान करोड़ों गुना फल देने वाला कहा गया है।[5] यद्यपि साधारणतः दान देने का कोई निश्चित समय नहीं कहा जा सकता क्योंकि उपर्युक्त कथन के अनुसार देश, काल एवं पात्र के अनुसार दान देने की बात कही गयी है अतः उनकी आवश्यकतानुसार कभी भी दान दिया जा सकता है तथापि पुराणकार द्वारा दान देने के किञ्चिद् निम्न अवसरों का उल्लेख किया है यथा – सूर्य के उत्तरायण एवं दक्षिणायन में प्रवेश के समय पुण्यमय विषुव काल में व्यतीपात, तिथिक्षय, युगारम्भ, संक्रान्ति, चतुर्दशी, अष्टमी, पूर्णिमा, द्वादशी, अष्टकाश्राद्ध, यज्ञ, उत्सव, विवाह, मन्वन्तरारम्भ, वैधृतियोग, दुस्वप्नदर्शन, धन एवं ब्राह्मण की प्राप्ति के समय अथवा जिस दिन श्राद्ध हो उस दिन दिया जा सकता है। यहाँ साथ ही यह भी उल्लेख किया गया है कि यह आवश्यक नहीं है कि इन्हीं अवसरों पर ही केवल दान किया जा सकता है अपितु सर्वदा अर्थात् कभी भी दान किया जा सकता है।

---

1. अग्निपुराण २०६/१
2. ग्रहो परागे यद्दानं सूर्य्यसङ्क्रमणेषु च।
   द्वादश्यादौ च यद्दानं पूर्तं तदपि नाकदम्। अ.पु. २०६/४
3. अ.पु. २०६/२
4. अ.पु. २०६/३
5. देशे काले च पात्रे च दानं कोटिगुणं भवेत्।। अ.पु. २०६५(१)

**अयने विषुवे पुण्ये व्यतीपाते दिनक्षये। युगादिषु च सक्रान्तौ चतुर्दश्यष्टमीषु च ॥**
**सितपञ्चदशीसर्वद्वादशीष्वष्टकासु च। यज्ञोत्सवविवाहेषु तथा मन्वन्तरादिषु ॥**
**वैधृते दुष्टदुस्वप्ने द्रव्यब्राह्मणलाभतः। श्रद्धा वा यद्दिने तत्र सदा वा दानमिष्यते ॥**[1]

**दान के प्रकार एवं दान तथा शुल्क में भेद -**

अग्निपुराणकार द्वारा सुवर्ण, अश्व, तिल, हाथी, रथ, दासी, गृह, कन्या तथा कपिला गौ का दान ये दस महादान दृष्टिगत किए गये हैं।

**कनकाश्वतिला नागा दासीरथमहीगृहाः।**
**कन्या च कपिला धेनुर्महादानानि वै दश ॥**[2]

अग्निपुराण में ही अन्यत्र सोलह महादानों का वर्णन किया गया है-तुलापुरुष दान, हिरण्यगर्भ दान, ब्रह्माण्डदान, कल्पवृक्षदान, सहस्त्र गोदान, सोने के गौ का दान, सोने के अीव का दान, सुवर्णमय अश्वयुक्त रथ का दान, सुवर्णरचित हस्तीरथ का दान, पाँच हलों का दान, भूमिदान, विश्वचक्रदान, कल्पलतादान, उत्तम सप्तसमौदान, रत्नधेनु का दान, जलपूर्ण कुम्भ का दान।

**सर्वदानानि वक्ष्यामि महादानानि षोडश। तुलापुरुष आद्यन्तु हिरण्यगर्भदानकम् ॥**
**ब्रह्माण्डं कल्पवृक्षश्च गोसहस्त्रञ्च पञ्चमम्। हिरण्यकामधेनुश्च हिरण्याश्वश्च सप्तमम् ॥**
**हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा। पञ्चलाङ्गलकन्तद्वद्धरादानं तथैव च ॥**
**विश्वचक्रं कल्पलता सप्तसागरकं परम्। रत्नधेनुर्महाभूत घटः शुभदिनेऽर्पयेत् ॥**[3]

इसके अतिरिक्त विद्या, पराक्रम, तपस्या, कन्या, यजमान और शिष्य से मिला हुआ धन दान न होकर शुल्क रूप होता है।[4] शिल्पकला से प्राप्त धन भी शुल्क ही होता है तथा व्याज, कृषि, व्यापार और दूसरों का उपकार करके प्राप्त किया गया धन, पासे, जुए, चोरी आदि प्रतिरूपक और साहसपूर्ण कर्म से उपार्जित धन तथा छल से प्राप्त किया हुआ धन ये तीन प्रकार के धन क्रमशः त्रिविध सात्विक, राजसिक तथा तामसिक फल प्रदान करने वाले होते हैं।

**कुशीदकृषिवाणिज्यप्राप्तं यदुपकारतः।**
**पाशकद्यूतचौर्यादिप्रतिरूपकसाहसैः।**
**व्याजेनोपार्जितं कृत्स्नं त्रिविधं त्रिविधं फलम् ॥**[5]

1. अ.पु. . २०६/५–८
2. अ.पु. २०६/२३–२४
3. अ.पु. १–४
4. श्रुतशौर्यतपः कन्यायाज्यशिष्यादुपागतम्।
   शुल्कं धनं हि सकलं शुल्कं शिल्पानुवृत्तितः।। अ.पु. २०६/२४
5. अ.पु. २०६/२५–२६

धार्मिक दृष्टि से धेनुदान करने वाला समस्त यज्ञों का फल प्राप्त करके निष्पाप हो जाता है और भोग तथा मोक्ष का अधिकारी होता है।[1] मरणासन्न मनुष्य को भी विधिपूर्वक सवत्सा गौ का दान करना चाहिए और उसे यह संकल्प करना चाहिए–अत्यन्त भयंकर यमलोक के द्वार पर तप्तजल से युक्त वैतरिणी नदी प्रवाहित होती है अतः उसको पार करने के लिए मैं इस कृष्णवर्णा वैतरिणी गौ का दान करता हूँ इसी सन्दर्भ में आगे भी कहा गया है कि गोदान से दीर्घायुष्य, आरोग्य, सौभाग्य एवं स्वर्ग की प्राप्ति होती है।[2] इसी क्रम में सोलह महादानों के अन्तर्गत सुवर्ण, पृथिवी तथा गौरी कन्या के दान का वर्णन करते हुए कहा गया है कि इनका दान करने से इसका फल सात जन्मों तक प्राप्त होता है। इन सभी दानों में एक मुख्य दान कन्यादान माना गया है, कन्यादान जो कि पिता के द्वारा विवाह के योग्य वर को अपनी कन्या का दान किया जाता है ऐसा कन्यादान करने वाला व्यक्ति अपनी इक्कीस पीढ़ी का उद्धार करके ब्रह्मलोक को प्राप्त करता है।

**हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम्।**
**त्रिसप्ताफलमुद्धृत्य कन्यादो ब्रह्मलोकभाक् ॥[3]**

कन्यादान के सन्दर्भ में कहा गया है कि जो व्यक्ति वचन द्वारा किसी को कन्या देकर भी उसे पुनः किसी दूसरे व्यक्ति को दे देता है तो उस व्यक्ति को राजा द्वारा उत्तम दण्ड दिया जाना चाहिए।[4] अग्निपुराण में कन्यादान के सन्दर्भ में नियम और उस नियम के उल्लंघन स्वरूप दण्डविधान का प्रतिपादन किया गया है, इस दण्डविधान का एक कारण यह भी माना जा सकता है कि तत्कालीन समाज में पिता अपनी कन्या को एक से अधिक पुरुषों को दानप्रदत्त करते होंगे जिससे इस प्रथा को रोकने हेतु इस नियम का विधान किया गया होगा जिससे मनुष्य भय के कारण अपनी मनमानी न कर सके और तत्कालीन समाज और अद्याधुना समाज में पुत्रियों का सम्मान किया जा सके। दान कृत्य का सामाजिक, आर्थिक एवं धार्मिक तीनों ही रूप में सदैव बहुत ही महत्त्व रहा है। इसके सामाजिक परिप्रेक्ष्य को देखा जाए तो यह समाज में मनुष्यों के प्रति आपस में मित्र भाव प्रेम प्रदर्शित करता है और किसी की भलाई के उद्देश्य

---

1. दानंहिसर्वधेनूनांविधानं चैतदेवहि।
सर्वयज्ञफलं प्राप्य निर्मलो भुक्तिमुक्तिभाक्।। अ.पु. २१०/२६
2. आसन्नमृत्युनादेयासवत्सागौस्तुपूर्ववत्।
यमद्वारे महाघोरे तप्ता वैतरणी नदी।
तां तर्तुंच ददाम्येनां कृष्णां वैतरणीञ्च गाम्।। अ.पु. २१०/३४
गोदानादायुरारोग्यसौभाग्यस्वर्गमाप्नुयात् । अ.पु. २११/४(१)
3. अ.पु. २११/३७
4 दत्ताप्यदत्तासातस्य राज्ञादण्ड्याः शतद्वयम्।
प्रदाय कन्यां योऽन्यस्मै पुनस्तां सम्प्रयच्छति।। अ.पु. २२७/१६

से किया जाता है, आर्थिक परिप्रेक्ष्य को देखा जाए तो समाज में जो आर्थिक रूप से कमजोर प्राणी हैं उनकी सहायता के उद्देश्य से किया जाने वाला दान होता है और धार्मिक दशा का विश्लेषण किया जाए तो हमारा समाज एक धार्मिक समाज का भी अंग माना जाता है जहाँ मनुष्य अपने इहलोक तथा परलोक को उन्नत बनाने के लिए अनेक प्रकार के धार्मिक कर्मकाण्ड करते हैं जिसमें एक प्रमुख कार्य दान कृत्य है, इसी धार्मिक क्रिया दान के सन्दर्भ में एक प्रमुख दान अन्नदान माना गया है जिसके सन्दर्भ में अग्निपुराण में कहा गया है कि अन्न के दान से बढ़कर न कोई दान हुआ है और न होगा। हाथी, अश्व, रथ, दासी तथा गृह के दान का फल अन्न के दान के सोलहवें भाग के बराबर भी नही होता है और भी कहा गया है कि यदि किसी मनुष्य के द्वारा कोई बहुत बड़ा पाप हो जाता है तो वह अन्नदान के द्वारा सभी पापों से मुक्त होकर अक्षय लोकों को प्राप्त करता है।

**अन्नदानात् परं नास्ति न भूतं न भविष्यति।**
**हस्त्यश्वरथदानानि दासीदासगृहाणि च।**
**अन्नदानस्य सर्वाणि कलां नार्हन्ति षोडशीम्।**
**कृत्वापि सुमहत् पापं यः पश्चादन्नदो भवेत्।**
**सर्वपापविनिर्मुक्तो लोकानाप्नोति चाक्षयान् ॥**[1]

अन्नदान को धार्मिक दृष्टि से जोड़ने का एक उद्देश्य इसका एक सामाजिक दशा भी हो सकता है कि अन्नदान के माध्यम से अपने समाज के जो भूखे एवं अन्न से वंचित लोग हैं उनके भोजन की व्यवस्था की जा सके। इस प्रकार के सभी दानों का उल्लेख करते हुए दान के सन्दर्भ में यह भी कहा गया है कि श्रद्धा से दिया गया जल भी अक्षय फल देने वाला होता है और अपने किसी लाभ के लिए दिया गया दान व्यर्थ ही होता है।[2] दान के पात्र को दान देते समय मन में संकल्प करके भूमि पर जल गिराना चाहिए। दान धर्म की महिमा का उल्लेख करते हुए अग्निपुराण में कहा गया है कि सागर का अंत हो सकता है किन्तु दान का कोई अंत नही है।[3] जो दान देने की प्रतिज्ञा करके दान नहीं देता है उसे सौ कुलों के विनाश का भागी बनना पड़ता है।[4] इसके अतिरिक्त अग्निपुराणकार द्वारा उल्लिखित किया गया है कि जो दान देने की प्रतिज्ञा करके भी दान नहीं देता है उस व्यक्ति पर राजा द्वारा सुवर्ण दण्ड अर्थात्

1. अ.पु. २११/४४–४६
2. प्रतिलाभेच्छयादत्तं यद्धनं तदपार्थकम् ।
   श्रद्धया साध्यते धर्मोदत्तं वार्य्यपि चाक्षयम्।। वही. २०६/३०–३१
3. मनसा पात्रमुद्दिश्य जलं भूमौ विनिक्षिपेत्।
   विद्यते सागरस्यान्तो नान्तोदानस्य विद्यते।। अ.पु. २०६/५६
4. कुलानान्तु शतं हन्यादप्रयच्छन् प्रतिश्रुतम्।। अग्निपुराण २०६/२६(१)

